# कुसुमलक्ष्मीः

[संस्कृतभाषयोपनिबद्धमभिनवं प्रणयोपाख्यानम् ।]

प्रणेता :

विद्यालङ्कारबिरुदोपेतो रत्नपारखीत्युपाह्वो रामचन्द्रसूनुरानन्दवर्धनः ।



१९६१

# KUSUMALAKSHMĪḤ

[A fiction written in Sanskrit language]

*Author :*

**Anandavardhana Ramachandra Ratnaparakhi**

**Vidyalankar**



**1961**

## प्रथमः समुच्छ्वासः ।

"अपि किञ्चिदिच्छति भवान् ?"

"न खल्वन्यत्किञ्चित् । उदपात्रपर्याप्तं पानीयमिच्छामि ।"

"उदपात्रपर्याप्तमेव खलु ?"

"ओम् भवति !"

"भवानेव तर्हि गृह्णातु । अपसारयाम्यहं स्वकीयमुदकुम्भम् ।"

"मा मैवम् । भवत्येव गृह्णातु । पश्चादपि शक्नोम्यहं ग्रहीतुम् । बहुतरगृहकार्यभारवती भवेद् भवती । पुष्कलानि भवेयुः कार्याणि तत्र भवदीये गृहे साम्प्रतम् । मदीयं किमस्ति तादृशं कार्यजातम् ! संन्यस्तसर्वक्रियः पथिकोऽस्म्यहं तावत् । नास्त्येव सम्भ्रमो दशवादनवेलायां कार्यनिलयोपस्थाननिबन्धनः ।"

पानीयाहरणार्थं लोकजलप्रणालकं प्रत्युपगतायाः कस्या अप्येकस्या वधूटिकाया भाषितं प्रतिभाषमाणोऽहमभ्यदधाम् । न जाने किमन्वभवत् सा वधूटी । नाक्षमत जातु सा मदीयं वाक्यजातमाकर्ण्य स्ववाचं विनियन्तुम् । साऽपृच्छत्—"किन्तर्हि पथिको भवान् ?"

"ओम् भवति !"

"क्व तिष्ठति भवानत्र ? कति जनाः सर्वे यूयम् ? भवतः पुनरन्ये के के ?"

अहमस्मये । अबोधयोस्तस्या नेत्रयोः कुसृतिपरायणे स्वकीये नेत्रे प्रक्षिपन्नहमुदतरम्—"भवती तं पुरःस्थं वटवृक्षं पश्यति न वा ? तत्रैव तिष्ठामि । एकल एवाऽस्मि । भवेयुरन्येऽपि केचन जनास्तत्र परदेशवासिनः । ममान्ये के ? पितरौ स्तः । तौ दूरदेशे तिष्ठतः । तावुत्सृज्य नास्त्यन्यः कश्चनाऽपि ।"

"नास्त्यन्यः कश्चनाऽपि ?"

"ओम् भवति ! नास्त्यन्यः कश्चनाऽपि ।"

"एतेन किमेतदुक्तं भवति भवान् सर्वथैकलः सन्ननाश्रितावस्थायामितस्ततः परिभ्रमतीति ?"

"ओम् भवति ! नूनं बहु साधु प्रत्यभ्यजानाद् भवती ।"

अस्मिन्नेवान्तरे तस्या उदकुम्भः पूर्तिमुपागच्छत् । अहं लीलया प्रावोचम्—"भवत्या घटः पूर्तिमुपगच्छति । अथेदानीं तत्रैव दत्तावधाना भवतु भवती । तदन्वहमपि पानीयं ग्रहीष्यामि ।"

"अये, उदपात्रपर्याप्तस्य पानीयस्य का मात्रा ? इतः प्रयच्छतु भवदीयमुदपात्रम् । अहं पानीयं प्रयच्छामि ।"

सा मम हस्तादादाय मदीयमुदपात्रं पूरयित्वा च पानीयेन तन्मह्यं प्रत्ययच्छत् । पुनरपि सा मामपृच्छत्—"अपि प्रभूतपरिच्छदो[1] भवान् ?"

"अप्रष्टव्यपरिच्छदकथोऽहम् । तस्मिन्विषये कृता जिज्ञासा मदीयमुपहासास्पदत्वमाविष्करिष्यति ।"

---

१. परिच्छदः='फालतू सामान' इति भाषायाम् ।

"तथाप्यस्त्येव मे जिज्ञासा ।"

"मादृशस्य पथिकस्य कियान् सम्भवति परिच्छदः ? एका पोट्टलिका । द्वित्राणि वस्त्राणि । इदञ्चाप्युदपात्रम् । अलम् । 'करतलभिक्षा तरुतलवासः' । नास्ति किं समीचीनमिदम् ?"

"कस्मान्नास्ति ?"

सा स्वकीयमुदकुम्भमुदतोलयत् प्रावोचच्च माम्—"शृणोतु । मदीय आवसथोऽस्मात्स्थानादनतिदूर एव वर्तते । एनमुदकुम्भं तत्र स्थापयित्वा द्रागेवात्र प्रत्यागच्छामि । स्वकीयमासितं[1] परित्यज्य न क्वाप्यन्यत्र व्रजतु भवान् । एषा समागच्छामि ।"

"यथा भवत्याज्ञापयति ।" अहमहसम् ।

सा निरगच्छत् । अहमप्यानन्दविशेषं कमप्यनुभवँस्तस्मात्स्थानात्स्वस्थानं प्रत्यागच्छम् ।

प्राभातिकः समय आसीत् । 'रायचूरा'ख्यान्नगरान्निर्गत्य ह्यो रात्रावेव बाष्पगन्त्या[2] अहमस्मिन् बेंगलूरनगरे समागच्छम् । अशेषां रात्रिवेलामत्रैव शयानो व्यत्यापयम् । रात्र्यन्धकारे प्रकाशमानान् विद्युद्दीपान् विहाय किमन्यदहं बेंगलूरनगरगतं शक्नोमि स्म द्रष्टुम् ? बेंगलूरनगरस्य भूमिः, गृहाणि, राजमार्गाः, विद्युत्तन्त्राणां स्तम्भाः, पुरवासिनः, तेषां च वेशभूषादिकं, भाषादिकं—सर्वमप्येतद् इदानीमेव सूर्यकिरणैरुपनते सुप्रसन्ने प्रकाशे दृष्टिपथमायाति स्म । अहमतिमात्रमाह्लादमन्वभवम् । आह्लादस्य प्रधानं कारणमिदमेवासीद् यद् बेंगलूरनगरगतानि

१. आसितम्=आसनम् । 'अड्डा' इति भाषायाम् ।

२. बाष्पगन्त्री=अग्निगन्त्री । 'आगगाडी' इति मराठीभाषायाम् ।

यानि वस्तूनि चिरकालान्मया दिदृक्षितानि, तानि सर्वाण्यप्यद्य मम चक्षुषोः पुरस्तादेव समुपस्थितान्यासन् । अद्याहं बेंगलूर-नगरे विद्य इत्येष विचार एव मम चेतस्यानन्दस्य कामप्यनिर्वचनीयामूर्मिमालां जनयति स्म ।

आह्लादस्य द्वितीयं कारणं—न चेद् भूतार्थमहं प्रच्छादयेयम् तर्हि—तस्या नवयौवनसम्पन्नाया बालायाः सन्दर्शनमप्यासीत् । कीदृशी खल्वभिरामदर्शनाऽऽसीत् सा ! कीदृशाः शुचिस्मिता आसँस्तदीयाः शरीरावयवाः ! अरुणोदयवेलायां साक्षादुषःकन्यैव स्वयमत्रोपनतेव । किञ्च, कीदृशी सुमधुर-झाङ्कारपरिपूर्णा खल्वासीत्तदीया वाणी ! स्त्रीणां वाण्याः श्लक्ष्णं माधुर्यं तासां रूपलावण्यादप्यधिकतरं चित्ताकर्षकं भवति जातु । संस्कारपरिपूर्णाया वाण्याः समलङ्करणेन विरहिता रूपकिन्नर्यपि पङ्गुतां भजते, यत्र खलु रूपविरहिताऽपि वाग्देवताऽनन्तां समृद्धिं पुष्णाति ! परं यत्र रूपं वाणी चोभयमप्येकत्र सम्प्रयुक्तं स्यात् तत्र किं वक्तव्यम् ? असौ हि नाम सर्वातिशायी सर्वाधिकशक्तिशाली सुदृढश्च मायानिर्मितो बन्धपाशः । आकर्षणस्य चरमा काष्ठा !

अहं तस्य वृक्षस्याधस्तात् स्वकीयमङ्गवस्त्रमास्तीर्य चक्षुषी निमील्य चास्यां विचारक्रियायां मग्नः समतिष्ठे—आह्लादस्याऽनिर्बन्धाया अनुभूत्याः शल्यक्रियामिव समाचरन् ।

"अपि शृणोति भवान्, अहमागतास्मि ।"—सैव वाक् ।

निमीलितनेत्रस्तथाविध एवाहमतिष्ठम् । इदमपि जातु मदीयं दौर्जन्यमेवाऽऽसीत् ।

"नेत्रे उन्मीलयतु तावत्।"—सैव वाक्।

अहं मौनमेवावालम्बे।

"जानात्येव भवाँस्तावन्नाऽहं संन्यस्तसर्वक्रिया भवानिवेति।"

मम दौर्जन्यं सा पर्यचिनोज्जातु। अहं चक्षुषी उदमीलयम्। सा पुरस्तान्नासीत्। मम पृष्ठभागे वृक्षगतबुध्नप्रदेशमाश्रित्योपविष्टाऽऽसीत्।

"वरम्, तर्हि सम्प्राप्ता नाम भवती!" अहमस्मये।

"भवान् भगवदाराधनं करोति स्म किं ध्यानावस्थितः सन्?"

"ओम् भवति! इदं मे सन्ध्योपासनम्। सूर्यंगताया अरुणमृदुप्रभाया निमीलिताभ्यां नेत्राभ्यां साक्षात्कारः कमप्यनिर्वचनीयं माधुर्यातिशयं तनोति। एतस्मादेव कारणादहं प्रत्यहमेवमुपविशामि। कस्यापि विशिष्टस्येश्वराख्यस्याराधनं नैव विदधे।

"ईश्वरं-वीश्वरं कमपि भवान्नैवाभ्युपगच्छति जातु।" सा निरुद्देश्यमेव मामपृच्छत्।

"ईश्वरस्याभ्युपगमोऽनभ्युपगमश्च वाग्विजृम्भणमात्रमेव केवलम्। तथाप्येकमहं वच्मि। ईश्वरमभ्युपगच्छँश्चेन्नाहं भवत्या अप्रियो भवामि, तर्हि तमभ्युपगच्छामि। अप्रियो भवामि चेत्सुत्यजोऽयमभ्युपगमोऽपि मे।" तामीषद्विलेखयितुकामोऽहमकथयम्।

"साधु, कियच्चारु प्रतिवक्ति भवानपि! ममाप्रियो नैव भवति तर्हि भवानभ्युपगच्छति; भवति चेत् सुत्यजोऽयमभ्युपगमोऽपीति। कां खल्वपूर्वां वाचमुपयुङ्क्ते भवानपि! भवतु। आस्तामिदं सर्वम्। अथ किमस्त्येतदनन्तरकरणीयं भवदीयमिति

निर्दिशतु तावत् ।" सा स्वकीयं प्रकृतं विषयमुपजीवन्ती प्रावोचत् ।

"किम्प्रयोजनं भवत्या मदीयेनैतदनन्तरकरणीयेन ?" भाल-पट्टे त्रिवलिं, नेत्रयोः कुसृतिम्, ओष्ठयोश्च मधुरमृदुकां स्मिति-रेखां दधानोऽहमजिज्ञासे ।

"प्रयोजनं वर्तत इत्येतस्मादेव तावत्पृच्छामि । महाननुग्रहो भविष्यति यदि भवान् मम प्रश्नस्य सरलया समीचीनया च गिरा प्रतिवचनं विदध्यात् ।" अपरिवर्तितमुखमुद्रा सा प्रावोचत् ।

"वरम्, यद्यहमपि किञ्चित्पृच्छेयम् प्रतिवक्ष्यति किम् भवत्यपि ?"

"बाढम्प्रतिवक्ष्यामि । पृच्छतु भवान् यथाकामम् ।"

"किं भवदीये बेंगलूरनगरेऽस्मिन् लोकजलप्रणालकेषु यावद्द्वादशमासमेवमेव जनसम्मर्दो भवति ?"

"नैव तावद् । अद्य कारणविशेषात्कस्मादपि गृहजल-प्रणालकेष्वस्माकं जलागमो न्यरुध्यत । तस्मादेवात्र तादृशो जनसम्मर्दो दृश्यते । एतत्प्रथममेवाद्याहमस्मिञ्जलप्रणालके पानीयाहरणार्थमागताऽस्मि ।"

"अहमप्यालोचयम्, किं कारणं येनैतादृशाः सत्कुलोत्पन्ना जना अस्मिन् राजमार्गपार्श्वस्थे लोकजलप्रणालके पानीयाह-रणार्थं तावत्यां संख्यायामुपातिष्ठन्तेति । भवतु । यदपि जायते तच्छ्रेयस एव भवति । परमेश्वरोऽपि परमकारुणिकः प्रति-भाति—"

"योह्यस्माकं गृहजलप्रणालकेषु पानीयागमं न्यरुणत् । नैव किम् ?" मदीयं जल्पितं मध्य एवावरुध्य सा प्रावोचत् ।

"बाढम् । यद्येवं नाभविष्यत् कथन्तर्हि भवती स्वगृहाद् बहिर्निरगमिष्यत् कथञ्च मादृशाय पथिकाय उदपात्रपर्याप्तं पानीयं सानुग्रहं प्रादास्यत् ?—"

"भवतु-भवतु । अथ किम्भवदीयमेतदनन्तरकरणीयमिति निवेदयतु तावदिदानीम् । परमेश्वरस्य कारुणिकतामुपजीव्य परस्तादपि शक्नुवः समालपितुम् ।" सा किञ्चिदुद्दीप्य प्रावोचत् ।

"शृणोतु तर्हि मदीयमेतदनन्तरकरणीयम्भवती । यदा खल्वस्मिँल्लोकजलप्रणालके सम्मर्दो न्यूनतां यास्यति, तदा स्नास्यामि । वस्त्राणि क्षालयिष्यामि । यदाऽऽतपे शोक्ष्यन्ते, तदा तान्यस्यां पोट्टलिकायां निक्षिप्य किञ्चिदाहारादिकस्य चिन्तां वक्ष्यामि ।"

मदीयमिदं निवेदनं श्रुत्वा सा तत्प्रथमं किञ्चिदस्मयत । तथाविधेव सा प्रावोचत्—"एवन्तर्हि ! तदा नाम भवान् किञ्चिच्चिन्तां वक्ष्यत्याहारादिकस्य !"

अहमवोचम्—"कुत एतत् ? कस्मादहसद् भवती ? किमभवत्तादृशं येन हसितं प्रासज्यत ?"

"कस्मान्न प्रसज्येत ? सम्प्रति हि भवानत्र स्थित्वा लोकजलप्रणालकगतस्य सम्मर्दस्य न्यूनीभावं प्रतीक्षिष्यते । द्वादशवादनाद्द्वैकवादनाद्वा पूर्वं तावन्नास्ति शक्यः स । तदा खलु भवान् स्नास्यति—मन्ये स्नानस्य सुतरां माधुर्यमनुभवन् । नाहं भूतार्थं ब्रवीमि किम् ? सपादैकवादनन्त्वेवमेव प्रतिपत्स्यते । तदनु वस्त्राणि क्षालयिष्यति भवान् । खद्दरवस्त्राणीमानि कदा वा क्षालयिष्यन्ते कदा वा शोक्ष्यन्ते ? तदेवं द्विवादनं वा सार्द्धद्विवादनं वा तावदत्रैव सम्प्रतिपत्स्यते । तदा नाम भवान् निर्यास्यत्याहा-

रस्य चिन्तां वोढुम् । भवतु । ह्यः कुत्र भवानभुङ्क्तेति कृपया निवेदयतु तावत् ।"

"ह्यो रात्रावेव तावद् बाष्पगन्त्र्याऽत्र सम्प्राप्तोऽस्मि । ह्यो दिवा सार्द्धैकवादनं वा द्विवादनं वा भवेद् यदाहं 'धर्मावरमि' त्याख्ये गन्त्रीप्रस्थानके पत्रावलीद्वयपर्याप्तं[1] भक्तमभुञ्जि ।" अहं कृत्स्नमपि यथायथमात्मवृत्तान्तं तस्यै न्यवेदयम् ।

"अहो नु खलु भोः !"[2] भूयोऽपि सा प्राहसत् । "इयं नामाऽऽहाराभ्यवहारनिबन्धना चिन्ता भावत्की !"

"भवति, पथिकत्वमिदम् । नेदं गृहावस्थायित्वं येन निर्धारिते समय आहारः प्राप्येत ।" कृतकं विचारगुरुत्वं प्रदर्शयन्नहम्प्रावोचम् ।

"नूनमत्यर्थं रुचिरस्वभावो भवान् ।" किञ्चिद्विचारमग्ना सती सा प्रावोचत् ।

"भवान् किं सामान्यतया भुङ्क्ते ?" सा भूयोऽप्यपृच्छत् ।

"यदपि मनुजः शक्नोति लघुनोपायेन[3] भोक्तुम् ।"

"तावन्मात्रमहमपि बुध्ये । मम प्रश्नस्यैतदस्ति हृदयं—सामान्यतया कस्य प्रदेशस्याहारमभ्यवहरति भवानिति ।"

"अथ किमहं निवेदयेयम् ? भारतस्य देशस्य यस्मिन्नपि प्रदेशे यादृशोऽपि समुपलभ्यत आहारस्तमेव सानन्दं कवलयामि । अखिलभारतीया खलु मदीयोदरदेवता । नैव सा प्रदेशानां मण्डलानां वा केषामपि परिचिनुते प्रभेदम् ।"

---

१. पत्रावली='पत्तल' इत्यस्मिन्नर्थे भागवतपुराणे प्रयुक्तोऽयं शब्दः ।
२. अहो नु खलु भोः='हाय राम !' इति भाषायाम् ।
३. लघुनोपायेन=Easily इत्यांग्लभाषायाम् ।

"अस्मदीयस्यापि तर्हि मन्ये प्रदेशस्याहारो रोचिष्यते भवते।"

"कः सन्देहः ? कुत्रत्या जनाः किंविधान्याहारवस्तूनि साधयित्वा भुञ्जते, का रीतिस्तेषामाहारग्रहणस्येत्येवमादिष्वपि विषयेषु वर्तते भूयसी जिज्ञासा मदीया। 'भोजनभट्टारकाः खलु ब्राह्मणा' इति यद्वदन्ति तन्मदीयेऽपि विषये चरितार्थम्भवत्येव।"

"सुमहानानन्दोदन्तस्तर्ह्येष। अथ भवानुत्तिष्ठतु। अद्य प्राघुणिकः खलु भवान्मदीयः। तदभ्यागच्छतु मदीयमावसथम्। यदपि सरसं वा नीरसं वा परिवेषयामि, तत्स्वीकरोतु। उत्तिष्ठतु तावत्।"

एतदाकर्ण्य कथं मम मन आनन्दोद्वेल्लितं सत् नर्तितुमारेभे, नैव पारयामि निर्देष्टुम्। तथापि कस्यापि वचनं प्रथम एव पर्याये नोचितं स्वीकर्तुमिति यत् सद्वृत्तं प्रवर्तते लोके, तस्यापि कथमनादरः शक्यः कर्तुम् ? अन्तरङ्गतया विद्यमानेऽप्यभिलाषे बहिरङ्गतया तस्य प्रच्छादनमेव सद्वृत्तं निगद्यते। यद्यपि 'आहारे व्यवहारे च त्यक्तलज्जः सुखी भवेदि'ति जागर्ति केषाञ्चिन्महतां वचनं तथापि सद्वृत्तनिबन्धनाः पितृपैतामहिकाः संस्कारा नैव शक्या अवहेलयितुं लघुनोपायेन। अतस्तद्विधसद्वृत्तवशंवदत्वादहमवदम्—"कस्मादेतावत्क्लेशजातं स्वीकरोति भवती ?"

"नाहं क्लिश्नाम्येतावता। एष भवतः प्रथम एव पर्यायोऽस्मदीयं बेंगलूरनगरं प्रत्यागमनस्य। तस्मान्नगरस्यैतस्य प्रतिपूज्योऽतिथिर्भवान्। एतन्नगरवास्तव्यत्वात् पर्यायेण ममाप्यतिथिरेव भवान्। अतिथिसत्क्रिया नाम धर्मः खल्व-

स्मदीयः । तं धर्मं पालयाम्येवाहम् । उत्तिष्ठतु चलतु च मदीय-मावसथम्प्रति ।"

"तदुत्थातव्यमेव भवति किम्? अप्यपरिहार्यमेतत्?" माधुर्यं निर्भरमनुभवन्नहमस्मये ।

"बाढम् । अपरिहार्यमेवैतदिति मन्यताम् ।" साप्यस्मयत ।

"एतादृशश्चेद् व्यतिकरस्तर्हि नास्ति मन्ये गत्यन्तरम् । चलाम्येव । परमेकमत्र वच्मि । एष भवत्या आचारः शास्त्रोपदिष्टमाचारमार्गमतिक्रम्य तिष्ठति । अज्ञातकुलशीलस्य, अज्ञातग्रामजनपदस्य च परदेशवासिनो जनस्य स्वगृहम्प्रत्युपनिमन्त्रणं नानुमन्यन्ते शास्त्रकाराः ।" सर्वथा प्रशान्तेन मनसाऽहमभ्यदधे ।

"परं यथार्थाऽतिथिसत्क्रिया या निगद्यते, सा तावदियमेव !" साऽपि मां निरुत्तरयितुं कथन्तु नामाविरकुरुतैवाचारमार्गम् ।

"तथात्वेऽनीशोऽस्मि वचनव्यापारस्य । स्वीकुर्वे भवत्या आतिथ्यमहम् ।" अहम्प्रावोचम् ।

अग्रतः सा पृष्ठतश्चाऽहं गृहीतपोट्टलिकः—बेंगलूरनगरवर्तिषु रमणीयेषु राजमार्गेषु ।

तस्या आवसथं प्राप्नुव । कियान् खलु मनोहरः स आवसथस्तदावसथपरिसरश्च । अन्तः प्रविश्य विज्ञातं निखिलमप्यभिनवमैश्वर्यं तत्र प्राचुर्येणोपलभ्यमानमस्तीति । मनस्येवाहं न्यगदम्—'अदृष्टमिति यद्वदन्ति तत्खल्विदमेव जातु ।'

× ×

"अहमप्येकलैव भवानिव ।"

"सत्यं किम्? अतिमात्रं शोचनीयं तर्ह्येतत् ।" भोजनार्थमुपस्थाय कवलमेकं स्वमुखे प्रवेशयन्नहमवोचम् ।

"कृत्स्नमप्यैश्वर्यमेतन्मदीयं शून्यीभूतमिव सममंदारणं भृशमुपतापयति माम्।"

"सम्भवति। तथापि बहुतरं जागरूकया स्थातव्यं भवत्या। नास्ति प्रतिपालनमैश्वर्यस्यापि सुकरतरं कर्म। भूयांसो हि पाटच्चरपोतकाः परधनलुण्ठनचतुरा विचरन्ति महीतले।"

गृहीतत्रिचतुरग्रासो विषयपरिवर्तनार्थमहमवोचम्—"भवती पाकं तावदतिरुचिरं साधयति। नूनं श्लाघनीयमिदं भवत्याः पाककौशलम्।"

"भवान् मदीयं पाकं श्लाघते। परं भूतार्थं ब्रवीमि। एवंविधासु श्लाघासु नास्ति मदीया रुचिः कणिकामात्रमपि साम्प्रतम्। भवते मम पाकोऽरोचतेदमपि मदीयं भागधेयमिति मन्ये। प्रतिपूज्यस्यातिथेः प्रियाचरण एव खल्वातिथ्यस्य भवति सार्थक्यम्।"

अहं तूष्णीमतिष्ठम्। साऽपि तूष्णीमतिष्ठत्। अवसिता भोजनक्रिया। हस्तौ प्राक्षालयम्। अङ्गप्रोञ्छनेन प्रौञ्छम्। बहिरागत्यैकामासन्दीमध्युपाविशम्। सा ताम्बूलार्थं मामपृच्छत्। अहमवोचम्—"त्रिचतुरा एला लवङ्गा वा स्युस्तर्हि ददातु भवती। नास्ति ममादरस्ताम्बूलग्रहणे।"

सा गृहाभ्यन्तरात्काश्चिदेलाः काँश्चिच्च लवङ्गानादाय बहिरागच्छत्। स्वकीयं करतलञ्च ममाग्रे प्रासारयत्।

तदीयात्तस्मात् प्रसारितात्सुकुमारात्करतलादेतासामेलानां लवङ्गानां च ग्रहणं तच्चापि तादृशेन कौशलेन येन मम कराङ्गुलीनां तस्याः करतलेन स्पर्शो मा भूत्, कापि कठिना क्रीडाऽऽसीत्। सनसनायमानया प्रबलविद्युद्धारया सञ्चरितस्य

खचितनग्नताम्रतन्त्रस्य समीपं यावत् स्वकरांगुलिं नीत्वा तद्वि-द्युदाघातादात्मपरित्राणं यादृक्कठिनं भवति, तादृगेव कठिन-मासीत्तत्करतलस्पर्शात् स्वकरांगुलिपरित्राणमपि ।

प्रादुर्भूतरोमाञ्चः खल्वहं समजाये ।

तस्याः सुतीक्ष्णदृष्टेरगोचरो नाभवदयं मदीयो गात्र-रोमाञ्चः ।

अधुना ?

करतलं प्रसृतमासीत् ।

अंगुल्य उपसर्पिता आसन् ।

अंगुलीनामेकपद एव प्रत्यादानं मनसि कस्याश्चिदसद्वृत्त-प्रेरिताया भावनायाः प्रवेशः सञ्जातोऽस्तीत्येतस्योद्घोषणमेवासीत् । सति स्पर्शे तु कः प्रत्युपायो वैद्युतिकादाघातादात्मपरित्राणस्य ?

भवतु । तथा प्रायते यथा एला लवङ्गाश्च समुद्ध्रियेरन् किञ्च तस्याः करेण स्पर्शो मा भूदिति । परम्…

नासीच्छक्यमेतत् ।

स्पर्शः समजायतैव ।

मदीयो गात्ररोमाञ्चः करांगुलीषु कमपि कम्पं समुदपादयत् । कम्पमाना अंगुल्यः कथं प्रभवेयुः स्पर्शादात्मनस्त्रातुम् ?

अहं तत्प्रथममन्वभूवम् यदितोऽपि सुमहानस्मि दुर्बलः ।

परं दुर्बलो नासमहमेव केवलम् ।

सापि तावत्येव दुर्बलाऽऽसीत् ।

अहमुदपश्यम् स्पर्शोत्थेन वैद्युतिकसीत्कारेण न केवलं सा न चापि केवलं तस्याः शरीरेन्द्रियाणि किन्तर्हि तस्याः कौशेय-वस्त्राणां रश्मयोऽपि सीत्कुर्वन्तीति ।

इदं दौर्बल्यम्—इदं 'भावपारवश्यं' किं ध्रुवमेव मानवीयान्तःकरणगतेभ्यो हीनतरेभ्यः स्तरेभ्यः समुद्गम्यमानः कश्चिदशुचिः स्वरोद्गारोऽस्ति ?

भूयोऽपि न्यमीलयम् स्वकीये नेत्रे । कञ्चित्कालं ध्यानावस्थितः सन्नहमेतेषां विचाराणां विश्लेषणं कर्तुमारेभे ।

ममौष्ठयोरुपरि विलसच्चारु स्मितं कस्यामपि भयावहायां शून्यतायां किञ्च चक्षुषोः सुमधुरा कुसृतिः कस्मिन्नपि विभीषणे जडत्वे पर्यणमत ।

मम समीपमेवान्यस्यामासन्द्यामुपविष्टा सापि मदीयानीमानि परिवर्तनानि सुसूक्ष्मवीक्षिकया वीक्षते स्म ।

"किम्भूयः कश्चनायं योगनिद्राप्रकारः ?" साऽस्मयत ।

"नैव भवति । एवमेव नेत्रयोः कापि निमीलिकेयम् । अद्य भवती करणेहत्य मां भोजनमकारयन्न वा ? तस्माच्चित्तं किमपि भोजनोत्तरं विश्रामलुलितं कामयते ।" अहं प्रत्यवोचम् ।

सा पुनरप्यहसत् । "विश्रान्तिं कामयते चेच्चित्तं, तत्किमित्थं विश्रान्तिराश्रयितव्या भवति ? आगच्छतु । अहं विश्रान्त्युपयोगिस्थानं निर्दिशामि भवन्तम् ।"

सा मामेकस्मिन् सुप्रकाशे, सुललितालङ्कृते, सुवातप्रवाते कक्षे नीत्वा प्रावोचत्—"अत्रास्मिन् पल्यङ्के विश्रान्तिसुखमनुभवतु । ह्यः प्रभृति भृशं परिश्रान्तो भवान् । रात्रौ स्वापस्याप्यवसरः सम्यङ् नोपालभ्यत जातु । तस्माद् यदपि न्यूनं स्यात्किञ्चित्तदन्यूनं कुरुताम् । अहं गच्छामि ।"

सा निरगच्छत् ।

अहं पुनः कक्षद्वारकपाटं पिधायान्तर्भागेन खल्वर्गलिकां

समायोजयम् स्वशरीरं च पल्यङ्कक्रोडे न्यक्षिपम् ।

यत्सत्यं सर्वाणि मम गात्राणि तदानीमिदमेव काङ्क्षन्ति स्म ।

× ×

यदा शय्यामुज्झित्वोदतिष्ठमहम्, तदा मदान्धस्येवासीद् मम स्थितिः। अद्भुतायां स्वप्नावस्थायामिवाहमात्मानं कलयामि स्म । इदमेव नाहमबुध्ये क्व विद्यमानोऽस्मीदानीमिति— बेंगलूरे वा, हैदराबादे वा, हरिद्वारे वा । बहिर्भागे वृक्षाणां छायायाः सूर्यातपस्य च तादृशः कश्चनासीत् सम्भेदो येन मदीयः कालनिबन्धनो विवेक एव व्यलुप्यत । एकदा प्रत्यभाद् इदानीमेव रात्रिः प्रभाता भवेदिति । भूयः प्रत्यभाद् इदानीमस्तमनवेलायामल्पीयानेवाऽवशिष्टो भवेत्समय इति । यदा कदाचित् चिराद्दिदृक्षिते नगरे प्रथमतो गच्छामि, प्रथमेऽहनि प्रायेणेदृश्येव मदीया सञ्जायते स्थितिः ।

शय्यां त्यक्त्वा समुदतिष्ठे । चक्षुषी अमृद्नाम् । अजृम्भे । कक्षाद् बहिरायाम् । बहिर्भागे समासीना सा तद्गतचेतसा पुष्पाणां वेणीं संग्रथ्नाति स्म । कपाटोद्घाटनध्वनिश्रवणसमकालमेवाऽभज्यत तस्याः सा ध्यानमुद्रा । सा मां व्यलोकयत्— सुतरां शान्तभावेन ।

मदीयः क्लमः सर्वः शयनाद् हेतोर्व्यपगत आसीदिदानीम् । मनः सुप्रसन्नं चासीत्—सुललिततरङ्गायाः सरिताया अल्पीयसी धारेव । यदि किमप्यनुभूयते स्म तदानीं साऽऽसीत् काप्यपूर्वा निश्चिन्तता ।

इदं गृहं किमपि मामकीनं नासीत् । मदधिकारगतं नासीत् ।

कस्यापि स्वजनस्य वा चिरपरिचितस्य वा नासीत् । तथाप्यस्मिन् गृहे नास्ति कीदृश्याऽपि चिन्तया प्रयोजनमित्येवं प्रतीयते स्म । नूनं कुत्रत्यः खल्वहम्, कुत्र खल्वस्मि सम्प्राप्तः, कस्य गृहे वर्ते, किमस्त्येतदूर्ध्वं मम करणीयम्, कुत्र वा सम्प्राप्तव्यम् इत्येवमादयः प्रश्ना मम सम्मुखमितोऽपि तथैवाविद्यन्त । तथात्वेऽपि मम मनः सर्वथा निश्चिन्तमासीत् । आश्चर्यस्य विषयत्वेऽपि लेशेनाऽप्याश्चर्यं नैवानुभूयते स्म । सर्वत्र खल्वेवंविधे व्यतिकरेऽदृष्टमेव प्रमाणम् ।

अहं तस्याः समीपमव्रजम् । सा निश्चलवृत्त्या तथैव तत्रोपाविशत् । परमतितरां नम्रस्वरेण सा मामपृच्छत्—"क्लमस्तावदिदानीम्भवदीयो व्यपगतो भवेत् । नैव किम् ? सुपर्याप्तमस्वपद् भवान् ।"

"ओम् भवति ! का वेला साम्प्रतमिति शक्नोति किम्भवती निर्देष्टुम् ?" अहमन्वयुञ्जि ।

"इदानीमनुमानतस्त्रिवादनं वा सार्द्धत्रिवादनं वा संजातं भवेत् । सार्द्धद्वादशवादनवेलायां भवान् शयनार्थमगच्छज्जातु ।"

"अप्येवम् ? किमहमेतावन्तं कालमस्वपम् ? अर्द्धहोरामात्रमेव भवेन्मदीयः स्वापकाल इत्यस्ति मामकीनः प्रत्ययस्तावत् ।"

सा तूष्णीं स्थिता ।

अहमपि तूष्णीं स्थितः ।

परं द्रागेव सा प्रावोचत्—"मुखं प्रक्षालयतु तावत् । एषा पानीयमुपानयामि । माध्याह्निकस्योपाहारस्य समयः सञ्जातोऽस्ति ।"

झटित्येव साऽभ्यन्तरे प्राविशत् । एकस्मिन्नुदपात्रे पानीय-

मुपानयत् । अहं मुखं प्राक्षालयम् । तदनन्तरमुभावप्यावा-मुपाहारार्थमेकस्य स्तम्भफलकस्य पार्श्वे समुपातिष्ठावहि ।

तस्यास्तादृशीमतिथिनिष्ठामवलोक्य मनस्येव भृशमतूतुष-महम् ।

"भवत्या नामधेयपदमितोऽप्यविज्ञातमेव तिष्ठति ।" अहमवोचम् ।

"मदीयं नामधेयं 'कुसुमलक्ष्मीः' इति ।" सा ह्यतिमात्रं मनोमोहकेन कण्ठस्वरेण न्यवेदयत् । अहमवालोकयम् यत्स्वनाम-धेयपदं निवेदयन्ती सा स्वकीयकरशाखाग्रभागेष्वेव बद्धदृष्टि-रतिष्ठत् ।

तत्प्रथममेव समीपतस्तस्या मुखाकृतिरचनासन्निवेशमहं न्यरूपयम् । तस्यास्तादृशं रूपलावण्यं किञ्च तादृशीमारोग्य-सम्पत्ति निरूप्य चकितः समभवम् ।

"यत्सत्यं कियद् यथार्थाक्षरं भवदीयं नामधेयपदम् !" सम्पुष्पितपाटलकपुष्पपत्रस्येव तस्या उत्तरौष्ठपट्टस्योपर्युष्ण-कामरूपिकाकषायबाष्पोष्मणा प्रादुर्भूतान् सुसूक्ष्मस्वेदबिन्दून् निर्वर्णयँस्तस्या नामधेयपदं स्तुवँश्चाहमभाषे ।

"अप्यन्तःकरणाभ्यन्तराद् ब्रवीति भवानेतत् ?" स्वकीयेषु करशाखाग्रेष्वेव बद्धलक्ष्या सा प्रावोचत् ।

अहमवोचम्—"ओम् भवति ! अन्तःकरणाभ्यन्तरादेवाहं ब्रवीमि ।"

मदीया दृष्टिरितोऽपि तस्या ओष्ठपट्टस्योपर्याविर्भूतानां स्वेदबिन्दूनामुपर्येव बद्धाऽऽसीत् । तेषां स्वेदबिन्दूनामाकारो रोचिष्णुता चानुक्षणं प्रवर्धते स्म । कदापि भवन्तः कस्यामपि

पुष्पवाटिकायां सूर्योदयसमये कस्यापि पाटलकपुष्पपत्रस्योपरि चमचमायमाना अवश्यायतोयकरिणका अपश्यन् किम् ? अपश्यँश्चेद् ध्रुवमेव प्रभविष्यन्ति भवन्तः कुसुमलक्ष्म्या उत्तरौष्ठपट्टपत्रोपरि समुपचितानामेषां स्वेदबिन्दूनां मनोहारित्वमनुमातुम् ।

"भवान् निवेदयिष्यति किम्भवदीयं नामधेयपदमिति ?" शनकैः स्वकीये चक्षुषी उपरिष्टादुत्तोलयन्ती सा मामन्वयुङ्क्त ।

"विकासः ।"

"हन्त, कियदिव रुचिरम्भवदीयं नामधेयमपि !" मदीययोश्चक्षुषोः स्वकीये चक्षुषी निपातयन्ती स्वकीयेन शाटिकाञ्चलेन चातीव मृदुतयोत्तरौष्ठपट्टगतं प्रस्वेदसलिलमपमार्जयन्ती कुसुमलक्ष्मीः प्रावोचत् ।

एतच्छ्रुत्वा केवलं व्यहसमेवाहम् ।

× ×

अवसितः खलूपाहारः ।

इदानीम् ?

इदानीं यावदहं व्यचरम् कस्मिन्नपि सौन्दर्यराशिविनिर्मिते स्वर्गलोके । परं सम्प्रति पूर्वाह्णापराह्णयोरुभयोरपि पर्यवसाने भूयोप्यहमवतरामि स्वकीये वास्तविके भूलोके—अस्मिन्नेवखरविशदे वस्तुजगतीत्यन्वभवम् ।

शनैः शनैश्चिन्तानां मेघमाला मदीयं मस्तिष्कगतमाकाशपटलमाच्छादयितुमारेभिरे ।

किमर्थमहमत्रायाम् ? किं कार्यं ममानुष्ठातव्यं वर्तते ? कियन्तं कालं मयाऽत्र स्थातव्यम् ? अद्यतने दिवस इदानीं यावत्तु समजायत भोजनादिकस्य प्रबन्धः । अथात उत्तरकालम् ?

दिवसं वा दिवसौ वा।

आतिथ्यमेकस्य वा दिवसस्य द्वयोर्वा दिवसयोः। सर्वदा कः कं संन्यस्तसर्वक्रियं स्वगृहे वासं दत्त्वा भोजयिष्यति खल्वेतस्यां परमेश्वरविरचितायां जगत्याम्? इयमपि तपस्विनी कुसुमलक्ष्मीः कत्यहानि मामनयैव रीत्योपचरिष्यत्यातिथ्येन? अवश्यमेव मया—नास्मि चेद् अपहृतबुद्धिविभवस्तर्हि—स्वकीयबेंगलूरनगरनिवासार्थः खल्वभ्युपेयः कश्चन स्वतन्त्रो मार्गः। अन्यथा 'सम्भावितस्य चाकीर्त्तिर्मरणादतिरिच्यते' इति व्यासवाक्योक्तप्रकाराया दुरवस्थाया आखेटो भविष्यामीति नास्त्यत्र सन्देहस्य लेशोऽपि।

अघूर्णत नाम मे शिरः। एकपद एव तमसाऽऽच्छाद्येताम् मे चक्षुषी। मम परिधानसेवकेऽविद्यत खलु द्रव्योपहस्तिका[1]। परं किन्तया विद्यमानया? क्वाविद्यत द्रव्यं तत्र? द्रव्यन्तु नाम रायचूरनगराद् बेंगलूरनगरं यावद् आगच्छतो मम बाष्पगन्त्रीयात्रापत्रक्रये मार्गगते च भोजनपानादिके चिरायैव निःशेषतामगच्छत्। अभिजानामि यद् एतस्मादेवोद्वेगकारणाद् बेंगलूरनगरगन्त्रीप्रस्थानकाभ्यन्तरे प्रविष्टायामस्मद्वाष्पगन्त्र्यां गतचेतनमिवात्मानमन्वभवमहम्। अतिमात्रमधडधडायत मे हृदयमपि। पार्श्वे नास्ति कुब्जा कपर्दिकाऽपि, एतावद् बृहदपरिचितं च नगरम्, गन्त्रीप्रस्थानकाद् बहिः कुत्र गच्छेयम्, कस्यावासप्रवृत्तिमनुयुञ्जीय, आहारादिकस्य विषये किं प्रबध्नीयाम्, रात्रिं क्व व्यत्यापयेयम् इत्येवमादयो भुजङ्गाकृतयः प्रश्नाः समुद्धृतफणाः फूत्कुर्वन्त इव मां पर्यवारयन्। प्रभातेऽस्या अभिरामरूपला-

१. द्रव्योपहस्तिका='बटुवा' इति भाषायाम्।

वण्यवत्याः कुसुमलक्ष्म्याः सन्दर्शनेन कञ्चित्कालं यावन्मुक्तचिन्तः समजाये । परं नैतेन पूर्णतया पर्यह्रियन्त ताश्चिन्ताः । इदन्तु पटान्तेन प्रच्छादनमात्रमेवासीत्तासाम्, येन कतिपयेभ्यः क्षणेभ्यस्तासां तिरोधानं सञ्जायेत । कुसुमलक्ष्म्या आवसथान्निर्गन्तव्यन्तु ध्रुवमेव । अथ ततो निर्गमनोत्तरकालं पुनस्त एव भीषणाः प्रश्नभुजङ्गमाः ।

ध्वस्तं नाम मम वक्षः कस्यापि विभीषणस्य, दुरुत्सार्यस्य, वोढुमशक्यतरस्य च भारस्याऽधस्तात् । अन्तरेणैतानि भाविदुरवस्थापिशुनानि कल्पनाचित्राणि नासीदन्यत्किमपि मम चक्षुषोः पुरस्तात् तदानीम् । सर्वथैवैकताना समजायत खल्वेषु प्रश्नेषु कृत्स्नाऽपि मदीया चित्तवृत्तिः । कौरवपाण्डवानां धनुर्विद्यायाः परीक्षाग्रहणसमये यथा मध्यमपाण्डवस्य वृक्षाग्रवर्तिभासपक्ष्यक्षिगोलकादृते नान्यदासीत्किमपि दृष्टिगोचरम्, तथैव ममापि स्वकीयान् भविष्यत्कालिकान् दुःस्वप्नान् विहाय नान्यत्किमप्यगच्छद् दृष्टिगोचरताम् ।

इयं कुसुमलक्ष्मी रामणीयकस्य, माधुर्यस्य, सौजन्यस्य चाप्रतिमा मूर्त्तिर्मम चक्षुषोः पुरस्तादेव गतागतं करोति स्म । परमिदानीं निभालयन्नपि तामसमर्थोऽभवमनुभवितुम् । तस्या नेत्रे, कपोलौ, ओष्ठौ, मस्तकम्, विपुलाः केशाः, केशानां वेणीविन्यासः, वेण्यां गुम्फिता नैकवर्णा पुष्पमाला, सुवृत्तघटितान्यङ्गानि, तेजस्विता, आर्यत्वम् इत्येवमादि सर्वमपि तावदाभ्यां नेत्राभ्यां पश्यामि स्म । परं सर्वमप्येतन्मदीयं चिन्ताकुलं व्यथितं च हृदयं मनागपि नैव स्पृशति स्म ।

वर्द्धितुमारेभे ममोद्वेगः । कुसुमलक्ष्म्याश्चक्षुषोः पुरस्तादेव

स्वकीयाभ्यामुभाभ्यामपि कराभ्यां स्वमस्तकं गृहीत्वा सधमत्कारमहं पार्श्वस्थायामासन्द्यामुपाविशम् ।

कुसुमलक्ष्मीः सर्वमप्येतदवालोकयत् । मदीयाऽऽकृतिरनुक्षणं निस्तेजस्का, भावशून्या, जीवकलाविरहिता च सञ्जायत इत्येतत्साऽपि सन्त्रस्तेन चेतसा पश्यन्ती प्रायतत तदीयमाशयं वेदितुम् ।

अहं स्वकीये नेत्रे न्यमीलयम् । कुसुमलक्ष्मीः सपद्येव मम समीपमुपागच्छत् । ममासन्द्याः पुरस्तान्मम जानुभ्यां सह स्वगात्रं सङ्गमय्यातिष्ठत् । मम मस्तकोपरि गृहीतविश्रमौ ममोभावपि हस्तौ स्वकीयाभ्यां सुकोमलाभ्यां हस्ताभ्यामादाय बलादपासारयत् किञ्च किञ्चित्स्निग्धतीक्ष्णेन कण्ठेनागदत्—"कीदृशी खल्वियमकाण्डयोगनिद्रा भवदीया ? नेत्रे उन्मीलयतु । नायमतिरेकाचारो रोचते मह्यम् ।"

"मदीयमिदं नयननिमीलनं कस्मादेतावदप्रियम्प्रतिभाति भवत्यै ? नैव जानाति किम्भवती नेत्रनिमीलनेन सुतप्तमपि मस्तकं किञ्चिच्छैतल्यमनुभवतीति ? नैव वाञ्छति किम्भवती कञ्चित्कालमहं विदीर्यमाणं स्वकीयं मस्तकं संवाहयितुं यत्नमातिष्ठेयमिति ?" यत्सत्यमहं गम्भीर आसमिदानीम् । नासीदयं कृतको गाम्भीर्याभिनयः ।

स्थितेर्याथात्म्यपरिज्ञाने न चिरायितं कुसुमलक्ष्म्याऽपि । न सा प्रायतत खलून्मीलयितुं मदीये चक्षुषी । सर्वथाऽबुध्यत सा नास्त्येष समयो विनोदाचारस्येति । तस्मात्तत्कालमेव विनोदाचारस्तस्याः कृत्स्नोऽप्यनुक्रोशे पर्यणमत । सा मम मूर्धजेषु कराङ्गुलिचालनं कुर्वती मातृवात्सल्यामृतोपेतेन कण्ठस्वरेण

प्रष्टुमारेभे—"कुत एतत् ? कथङ्कारमात्मानमनुभवति भवान् ?"

मम मूर्ध्नि तस्याः कराङ्गुलिपरिचालनं नितरां सुखप्रदं प्रत्यभान्मह्यम्। अस्या एवानुभूत्याः क्रोडे स्वात्मानं निपात्य स्वशरीरगतं स्नायुमण्डलं कृत्स्नमपि विश्लथयेयमिति समजनि मनोऽभिलाषः।

एकः खल्वसावप्यासीत् स्पर्शो यस्मादहमबिभयम्, येन च मस्तिष्कं ममाभवद् यन्त्रितमिव, स्तब्धमिव, निःस्पन्दमिव सर्वथा। एकश्चायमपि बभूव स्पर्शो यम्प्रत्यात्मानं सर्वतः संगृह्य समर्पयितुमभ्यलषमहम्। मस्तिष्कगतः प्रत्येकमंशुः समुत्सुकः सन् विशिष्टां कामपि तृप्तिं, शान्तिं, चेतनाञ्चासादयामास। ज्येष्ठमासे प्रखरमध्याह्नवेलायां मरुस्थलं प्राप्तः कश्चन तृषातुरो जन्तुः सम्प्राप्य भागीरथ्या निर्मलनीरधारां यथा किमपि मर्मशिशिरं माधुर्यमनुभवति, तथैवाहमपि कुसुमलक्ष्म्याः करशाखानां मम मूर्ध्नि संस्थापनेन माधुर्यमन्वभवम्।

अस्मिन्ननुभवे नाविद्यत विद्युत्, नाभवत् पावको, नासीत्प्लोषो, नावर्तत चापि वेपथुर्वा रोमाञ्चो वा। एकैवाभवदनुभूतिर्या खल्वानन्दनिबन्धना—या खलु रसनिबन्धना। रसस्य सुप्रशान्ता धारा कुसुमलक्ष्म्याः करशाखानामग्रभागान्निःसृत्य सर्वास्वपि नाडीषु मम शरीरगतासु मन्दमन्थरगत्या प्रावहत् खलु। मन्मथनिबन्धनायास्तावन्नासील्लेशोऽपि विषयवासनायाः। कुतस्तस्याः सम्भवो नाम यदा हि कुसुमलक्ष्म्या हृदय आसीदनुक्रोशस्य सर्वातिशायिनी भावना मम हृदये चासीद् विश्रान्तिलाभस्य परमोत्कटा खल्वाकाङ्क्षा ?

अहं तूष्णीमेवातिष्ठम्।

सा भूयोऽप्यन्वयुङ्क्त—"कस्मान्न किमपि विज्ञापयति भवान् कथङ्कारमात्मानमनुभवतीति ?"

अहं भूयस्तूष्णीमेव ।

इदानीं सा साग्रहं प्रावोचत्—"कथयतु नाम किमपि। भवदीयं मौनं नाहं शक्नोमि सोढुम् । अहमुद्विजे ।"

"कुसुमलक्ष्मि,......अहमप्युद्विजे ।" हठादेव मम मुखादात्मनीनत्वातिशयद्योतकं सम्बोधनपदमविचारितमेव निरगात् ।

"कुत एतत् ? किमसह्यां शिरोवेदनामनुभवति भवान् ? इतः प्रदीयतां शिरः । अहं संवाहयामि तत्। मनागुत्थाय स्थानादस्मात्तत्र पल्यङ्के समागच्छतु ।"

## द्वितीयः समुच्छ्वासः ।

अहं गत्वा पल्यङ्के न्यपतम् । कुसुमलक्ष्मीर्मम शिरःपार्श्वं आस्त । निःशब्दमेव सोभाभ्यामपि स्वहस्ताभ्यां मम शिरः समुदनयत्। शनकैः स्वोरुप्रदेशे संस्थाप्य तत् संवाहयितुमारेभे ।

"विकासमहाभाग, इदानीं भवतः शिरसो गुरुत्वं किञ्चदपायात् किम् ?" किञ्चित्कालानन्तरं वातावरणे व्याप्तं मौनं भङ्क्त्वा सा प्रावोचत् ।

"आम् कुसुमलक्ष्मि, किसलयसुकुमारः खल्वार्द्रकुवलयपत्रप्रतीकाशस्तव करस्पर्शः किमप्यौषधगुणमाविष्करोतीव ।" न जाने कया प्रेरणया विचित्रकृत्रिमकाव्यमय्यां भाषायामहमभाषे ।

"यदा 'कुसुमलक्ष्मी'ति सम्बोधयति मां भवान्, तदा कियदिव हृद्यं प्रतिभाति तत्सम्बोधनपदमिति कल्पना स्पृशति किम् भवदीयं मस्तिष्कपथम् ?"

"कविरस्मि कुसुमलक्ष्मि, कस्मान्न स्पृशेदियं कल्पना मदीयं मस्तिष्कपथम् ? कवयस्तु रात्रिन्दिवं कल्पनालोक एव विहरन्ति न वा ?"

"तद् भवानपि केवलं कल्पनाश्रयेणैव तादृशमुद्वेगमन्वभवत् । नैव किम् ? बाढम्-बाढम् । इदानीमहमबुध्ये ।" अल्पवयस्का बालिकेव व्यहसत् कुसुमलक्ष्मीः । "सत्यं वदतु भवानिदानीमहं भवदीयं रहस्यजातं सम्यगवागच्छम् न वेति ?"

तस्या एवङ्कारं विहसनसमनन्तरमेव विलयं गतः कृत्स्नोऽपि ममोद्वेगः । तत्क्षणमेव समुदतिष्ठेऽहम् । शय्यायामेव पद्मासनं बद्ध्वा तामेव तदेकदृष्ट्या पश्यन्नहमासि ।

प्रकाशमानाभ्यां स्वनेत्राभ्यां सा मामेव निभालयितुमारेभे । न तावदत्यर्थं गाम्भीर्यमेव व्यलसत्तदानीं तदीये मुखमण्डले नापि च सुव्यक्तः स्मितहास एव । ओष्ठयोरुपरि विलसत्तरललीलाहसितं तदीयं शनकैरपलीयमानमुपालक्ष्यत किञ्च मुखमुद्रा किञ्चिदिव विचारगुरुका सम्प्रत्यपद्यत ।

अहमन्वयुञ्जि—"कुसुमलक्ष्मि, नेत्रनिमीलनपरे सञ्जाते मयि त्वमुद्विजस इति यत्त्वमात्थ, कस्तत्र हेतुः ?"

साऽब्रवीत्—"यावदहं भवन्नेत्रनिमीलनस्यैवञ्जातीयकस्य कारणं तात्पर्यं च नैवावगच्छामि सम्यक्तया, तावत्साहजिक एवायं ममोद्वेगः ।"

"भवतु । ब्रूहि तावत् । मम नेत्रयोर्निमीलितयोः सतोः

किम्बुध्यसे त्वम् ?"

"नाहं किमपि बुध्ये। तासां चिन्तानां विषये ममास्ति बुभुत्सा, याः खल्वतिमात्रं तत्रभवन्तं व्यग्रयन्ति किञ्च यासामुपतापं परिहर्तुं नेत्रनिमीलनाय परवानिव सञ्जायते तत्रभवान्।"

"अहं नु खल्वेकस्यैव दिवसस्याद्यतनस्य त्वदीयः प्राघुणिकः। न त्वं मन्निबन्धनाभिश्चिन्ताभिरात्मानमत्यधिकं परिक्लेशयितुमर्हसि।"

"कस्माद् भवानेवमाह ?"

अहमवालोकयमेतद्वाक्यं व्याहरन्त्यास्तस्या मुखमण्डले न तावदासीद् हासो नापि च स्मयः। भालप्रदेशे काप्येका सूक्ष्मतरा वलिः प्रादुर्बभूव। नयनच्छदौ निमेषोन्मेषविरहितावास्ताम्। प्रश्नस्यैतस्य सुस्पष्टं प्रतिवचनं तयाभिलष्यत इति चक्षुषी अबोधयताम्। किञ्च यावत्कालं प्रश्नस्यैतस्य प्रतिवचनं नैवोपलप्स्यते तया, तावत्कालं सा मनस्तोषस्य लेशमपि नैव स्प्रक्ष्यतीति कृतप्रतिज्ञेव सा प्रत्यभात्तदानीम्।

अहं तद्विधदृढप्रतिज्ञतायाः प्रगाढत्वमूनयितुमैच्छम्। तस्मान्नाहं किमप्यभाषे। केवलमहसम्।

"नैव किं निवेदयिष्यति भवान् यत्कास्ता अन्याश्चिन्ता व्यथा वा भवतो जीविते या भवदीयमन्तःकरणमनारतं तुदन्ति। अस्य प्रश्नस्य हेतुरयमेव यदेतेन भवतो हृदयगता व्यथास्तद्गतं च नीरसत्वं किञ्चिन्मात्रायां न्यूनम्भविष्यति। जानात्येव भवान् हृदयाभ्यन्तरस्थो दुर्वहोऽपि व्यथाभारः केष्वपि विस्रम्भभाजनेषु जनेषु व्यक्तीकृतः सन् सुवहः सुसह्यश्च सञ्जायत इति।"

न ना क्रोड भुजान्तरम् इति क्रोडशब्दो नपुंसकम्। अश्वानामुरः क्रोडा।

तदीयमेतद्वाक्यमत्यन्तं गुरुत्वोपेतात्कण्ठादुदगच्छत् । वातावरणे गुरुत्वमनुक्षणं प्रावर्धत । मम हासाश्रयणं वा विनोदाश्रयणं वा तदानीं नैवाऽभविष्यत्कालोचितम् ।

साहजिकमेव ममापि वृत्तिर्गुरुत्वोपेता समजायत । ममाकृतावपि प्रासरच्चिन्तननिबन्धना प्रगाढा छाया । कञ्चित्कालमहं स्तब्ध इव, शून्य इवावागिव चाभवम्—स्वकरतले मस्तकं सन्निवेश्य—विचारप्रवाहोपरि तरङ्गायमाण इव—स्वीकृतवाग्यामः सन् ।

मध्ये-मध्ये, नेत्रे उन्नमय्य तदेकदृष्ट्या कुसुमलक्ष्मीमवालोकयम् । इतोऽपि तथैवाविद्यत तस्या नेत्रयोः प्रश्नात्मकता । स्त्रीणां चक्षुषि प्रादुर्भूतायां निष्कलुषायामेतस्यां प्रश्नात्मकतायां कीदृशमपूर्वमबोधमाधुर्यमापूरितमस्ति जगत्स्रष्ट्रा !

अहं दूरमासम् । किञ्चिदग्रत उपासर्पम् । सा तत्रैवाचलाऽऽस्त । भूयोऽपि किञ्चिदग्रत उपासर्पम् किञ्च द्रागेव तस्याः क्रोडे स्वात्मानं न्यपातयम् । क्रोडो यत्सत्यं पुष्पैः समाकीर्ण आसीत् ।

शनकैः कुसुमलक्ष्म्या हस्तावग्रतोऽसर्पताम् । सृत्वा च मम मस्तकोपरि लम्बेताम् । ततः पुनरधस्ताद् असर्पताम् । मम नेत्रयोरुपर्याटीकेताम् । तस्या आश्चर्यस्येयत्ता नासीत् । मम नेत्राभ्यां नैःशब्द्यं भजमानोऽपि नामातीव प्रचण्डवेगशाली खल्वश्रुप्रवाहो निर्यंस्तस्याः कौशेयशाटिकामौनत् ।

कोऽर्थः खल्वेषामश्रूणाम् ? कां पुनः पुरातनस्येतिहासस्य जवनिकामुत्तोलयितुं प्रायतन्तेमे ? स्त्रीजातेश्चक्षुषां सहजं मण्डनमिमे वारिबिन्दवः पुरुषजातेश्चक्षुष्षु संक्रम्य किं वस्तु सञ्जायन्ते ?—कञ्चित्कालं जात्वस्मिन्नेवोहापोहे निमग्ना कुसुम-

लक्ष्मीः संरुद्धवाक्प्रसराऽऽस्त ।

परं ममेमान्यश्रूणि तस्या वात्सल्यभावमुदबोधयन् । सा सञ्जातवत्सा माता नासीत् । तथापि स्वकीय उत्सङ्ग अश्रुपूर्णाकुलेक्षणं मादृशं शिशुं निपतितं दृष्ट्वाऽविलम्बितमेव तस्या मातृभावः प्रत्यबुध्यत । ममापि तदानीं पूर्णतया प्रत्यबुध्यत 'शिशुभावः' । अहमपि शिशुरिव तस्याः सुकोमल उत्सङ्गे स्वात्मानं समपिण्डयम् । हन्त, कीदृशस्तारुण्यस्य शैशवे विपरिणामः खल्वयम् !

सा सपद्येव स्वशाटिकाञ्चलेन मम चक्षुषी प्रामार्ट् । मम चक्षुर्भ्यां वारि तावदितोऽपि प्रावहत् । बालकल्पनया सा स्वतूलपिण्डमृदुलाभ्यां करतलाभ्यां मम चक्षुषी दृढमाच्छादयाम्बभूव । चिन्तयामास जातु पक्ष्मणोरेवंविधेन दृढमाच्छादनेनाऽश्रुप्रवाहः स्वयमेव निरोत्स्यत इति ।

"महाभाग, अपि रोदिति भवान् ?"

"नैव तावत् । भवत्याः सदयं व्यवहारं विलोक्यैवमेव मम चक्षुषी बाष्पवारिभिरापूर्येताम् । ममाश्रूणि खल्विमानि किमव्यतीतकालिकं ममायुषः सुखं दुःखं वा विवृण्वन्तीति नैव बुध्यताम् भवती ।"

"कः खल्वेतादृशोऽभूतपूर्वो मदीयो व्यवहारो, यं हि 'सदये' त्यनेन विशेषणेन विशिष्याद् भवान् ?"

"इदानीं यावत् सर्वथैकलः सन्नुपेक्षितस्येव जनस्य जीवनं व्यत्यापयमहम् । इतश्चेतश्च पर्यटाट्ये । एतादृशमुपेक्षितं जनं प्रत्यपि भवती तावन्तमनुक्रोशं कलयतीति विज्ञाय यदि मम चक्षुषी अश्रुवारिभिरापूर्येताम् तर्हि किन्तत्राश्चर्यम् ? एतानि

खलु ममाश्रूणि मम कृतज्ञताया द्योतकानि सन्तीति बुध्यताम् भवती ।"

"कृतज्ञतायाः—कृतज्ञतायाः !" यथा जननी स्वकीयस्य बालस्य स्खलितललितां वाणीमनुकुर्वती तस्य वक्त्रं चुम्बितु-मीहते, तथैव कुसुमलक्ष्मीरपि मदीयाञ्छब्दान् द्विरुच्चार्यं वक्त्रं मदीयं चुम्बितुमुदतोलयत् ।

एवं तावत्, तस्मिन्नावसथे खल्वन्तरेण नौ नहि कश्चिद-परोऽवर्तत । बहिष्टात् कश्चिदायास्यतीत्यपि नासीदवक्लृप्तिः । तथापि कक्षस्यैतस्य द्वारमपावृतकपाटं विलोक्य सा किमपि सञ्चुकोच । उत्तोलितमपि मदीयं वक्त्रं तद्वदेवोपधाने संस्थाप्य सोदतिष्ठद् द्वारं च समावृतकपाटं कर्तुमटीकत । नूनमन्तराय-सहस्राशङ्की परमकातरस्वभावो भवति भगवान् सहजस्नेह-बन्धः ।

अथोत्थितायां तस्यामहमप्युदतिष्ठम् । सम्मुखं विद्यमानस्य वातायनस्य समीपमगच्छम् । बहिरपश्यम् । सान्ध्यवेला प्रत्या-सन्नैवास्तीति प्रत्यैयत ।

कुसुमलक्ष्मीः पिधाय कक्षद्वारमर्गलयित्वा चान्तर्भागेन कपाटं यदा प्रत्यावर्तत मां च पल्यङ्के नापश्यत्, तदा सा तत्रै-वागच्छत् यत्राहमासम् ।

"किम्पश्यति भवान् ?" सा शून्यभावेनापृच्छत् ।

"भवदीयस्य बेंगलूरनगरस्य खल्वभिख्यां पश्यामि ।"

"कीदृशं पुनरिदानीं शिरसो गुरुत्वम्भवतः ?" ललाटे-ऽवस्रस्तां कुञ्चितालककोटिं स्वकीयां करेण व्यवस्थापयन्ती साऽन्वयुङ्क्त ।

"अपयातं नाम तदिदानीम् ।"

सा तूष्णीमास्त ।

अहमपि तूष्णीमासि ।

किञ्चित्कालानन्तरमहमवोचम्—"मन्ये प्रत्यासन्नेवास्ति सान्ध्यवेला सम्प्रति। बहिर्यात्वा कञ्चित्कालं पर्यट्य समागच्छेयम् तर्हि कीदृशं भवेत् ?"

"बहुशोभनम्भवेत् । चलतु । अहमपि साकमेव चलामि। समीपमेवैक: शुष्क: कासारस्तिष्ठति । तत्र चलाव: ।"

"शुष्क: कासार: ? नास्ति किन्ततोऽधिकं प्रेक्षणीयं स्थानान्तरम् ? किं करिष्यति भवती कासारेण शुष्केण ? क्वाप्यन्यत्र नयतु माम् । अथवा निरुद्देश्यमेव कस्मान्न पर्यटेव ? मदर्थं प्रत्येकं स्थानं भवदीयस्य नगरस्यैतस्य प्रेक्षणीयमेवास्ति साम्प्रतं तावत् ।"

"बाढम् । युक्तमेवास्ति भवदीयमुक्तमेतत् । एष हि प्रथम: पर्यायोऽत्रागमनस्य भवत: । नैव किम् ? साधु तर्हि । तथैवास्तु। इयमहमिदानीमास्थितसज्जा भवामि ।"

सा मुखं क्षालयित्वा स्वकीयाया: प्रसाधनपीठिकाया: समक्षमायात् । कङ्कतिकया केशान् व्यतूस्तयत् । करकर्पटेन मुखं प्रामार्ट् । अंगुल्यग्रैर्मुखधूसिकामादाय[1] ललाटफलकं, नासिकां, कपोलौ, उत्तरौष्ठपट्टिकां, चिबुकं, ग्रीवां च पूगिकाक्रमेण समुपाचिनोत् । सुकुमारतया च स्वकरतलाभ्यां तां धूसिकां सर्वत्र प्रसार्य सम्यगुपालिम्पत् । अङ्गप्रोञ्छनेन च पुनस्तामपा-

१. मुखधूसिका='फेस क्रीम' इत्यांग्लभाषायाम् ।

मार्ट् । तदनु सुरभिणा मुखरेणुना कृत्स्नमपि मुखप्रदेशं संव्याप्य तेनैवाङ्गप्रोञ्छनेन तमपि तथैवापामार्ट् । कारणेन केनापि तस्या उत्तरौष्ठपट्टिकायां कापि चिक्कणता प्रादुरभूत् । सुदृढं सुवर्तुलं च सम्प्रसार्य तामुत्तरौष्ठपट्टिकां भूयोभूयः करकर्पटेन मृष्ट्वा तत्रत्यां चिक्कणतामपाकरोत् । भालप्रदेशे कृष्णवर्णं तिलकं विन्यास्यत् । कबरीबन्धे पुष्पस्तबकमगुम्फत् । शाटिकाञ्चलं संव्यवस्थाप्य च मम समीपमागच्छत् । हस्ते सम्पुटीकृतस्तनुतरः करकर्पट आसीद् येन प्रसाधनोष्मणोत्तरौष्ठपट्टिकायामुपचीयमानं सुसूक्ष्मस्वेदकणिकाजालमपमार्ष्टुं सा मध्ये मध्ये प्रायतत । ऐच्छिकतया सुदीर्घं सम्प्रसरणशीलो, मांसलो, नवनीतकोमलः, परिपुष्टश्च तदीयः स उत्तरौष्ठो यत्सत्यं तस्यै भगवत्या सौन्दर्यदेवतयोपहारीकृतं महदुपढौकनमेवावर्तत । सा मामवालोकयत् ।

"एतं स्वकीयं प्रसेवं कस्मादुदहरद् भवान् ? अयमत्रैव तिष्ठतु नाम ।" सा सहसा मामन्वयुङ्क्त ।

"अस्तु नामायमपि वराकः साकमेव । अयमपि पश्यतु भवदीयमिदं बेंगलूरनगरम् ।" सविनोदमहं प्रत्यवदम् ।

सा नैव किमप्यभाषत ।

आवां गृहाद् बहिरागच्छाव । राजमार्गेषु सम्प्रति बेंगलूरनगरवासिनां सञ्चरणं प्रकामं प्रावर्धत । द्वे परस्परविरुद्धे धारे प्रत्यर्धं राजमार्गस्य प्रवहन्त्यावदृश्येताम् ।

कामपि युवतिमात्मना सह समादाय राजमार्गेषु पर्यटितुं निष्क्रमणस्यैष प्रथम एवासीदनुभवो मम जीवने । इदं बेंगलूरनगरमासीदिति मम महद् भागधेयं मन्तव्यम् । नहि कश्चिदप्यत्र मां

पर्यचिनोत् । मां परिचिन्वद्भिराकीर्णं किञ्चिदन्यन्नगरम-भविष्यदिदं तर्ह्येवङ्कारमेकां तरुणीमादाय पर्यटन्नहं कियदधिकं समकुचिष्यमित्येतस्य व्यतिकरस्य कल्पनैव कर्तुमुचिता ।

परं यदाऽहं कुसुमलक्ष्मीमानन्दस्य, प्रसादस्य, आह्लादस्य च परां कोटिमिवानुप्राप्तां व्यलोकयम्, तदा न वेद्मि कीदृशैरभूतपूर्वैर्भावैरभिभूतं समजायत मे मनः । अहं कस्मिन्नप्यगाधे दुरवगाहे विचारमहासागरे निमज्जामीति प्रत्यैयत ।

पुरस्तात् पादयोरधस्ताच्चाऽप्यविद्यत बेंगलूरनगरवर्ती राजमार्गः । असंख्याता जनास्तत्र समचरन् । अहं तस्य राजमार्ग-स्यावस्थामपश्यम् । अपश्यम् चापि तस्योपरि सञ्चरतां जनानाम-वस्थाम् । उभयोरप्यवस्थयोः कीदृशः खल्वासीद् विस्मयोत्पादको व्यत्यासः ! सर्वत्र लोकविलक्षणं गतिशीलत्वमदृश्यत । पथ-चारिणोऽपि गतिशीलाः, पन्थाः खल्वपि गतिशीलः । पथो गति-शीलत्वं तस्य स्थिरतायां विलीय प्राणत् । किञ्च पथचारिणां स्थिरत्वं तेषां गतिशीलतायां विलीय प्राणत् । अहं पथचार्यस्मि । यात्र्यस्मि । यात्री स्थिरत्वमङ्गीकृत्य शक्ष्यति किं कदाप्य-वस्थातुम् ? पथिप्रतीकाशा खल्वियं कुसुमलक्ष्मीरेकैकमुद्ध्रिय-माणं मम चरणं भूयो भूयः स्वहस्ताभ्यामादाय स्वात्मना संश्लेषयितुमैहत । परं कोऽपि पथिकः क्वापि तथा समश्लिष्यत किम्पथा सह, यथैकदा पथि न्यस्तं स्वकीयं चरणं नैव तस्मात्का-मयेत प्रत्युद्धर्तुम् ? पथिकश्चेदहं तर्हि पथिकधर्मो मयाप्यनुसर्तव्य एव । कुसुमलक्ष्मीः शाश्वताय कालाय मामात्मना सह संश्लेष-यितुमैहत जातु । परं मया स्वात्मा प्रसह्य तस्या दूरमपसार-

यितव्यः । यावता पथिकोऽस्मि । इमं विचारमक्ष्णोः पुरस्तान्निधाय यदाऽहं सविग्रहमाह्लादमिव तां कुसुमलक्ष्मीमपश्यम्, तदा केनाप्यनिर्वचनीयेन विषादेन परिव्याप्तमिवाभवद् मे हृदयम् । निष्पापं, पुष्पसुकोमलमात्मनि सर्वथा विस्रम्भशीलं च किमपि स्त्रीहृदयं प्रतारयिष्यामि किन्तर्हि ? प्रतारणा ? सा चापि मादृशेन जनेन—यो हि स्वात्मानं सर्वथा शुद्धचेतसं, निर्मलस्वभावं, निष्कलङ्कचरित्रं, धृतविग्रहं सौजन्यं च मनुते ? हन्त भोः, कीदृशं विडम्बनं खल्विदम् !

आवां पथि ह्यनारतमसर्पाव । कुसुमलक्ष्मीर्न जाने कैः कैः शिशुजनोचितैः कलकलालापैः कस्मिन्कस्मिन्वस्तुनि मम लक्ष्यमाकर्षत्; तस्य च वस्तुनो विषये किं किं ज्ञातव्यमजिज्ञपत् । परमहम् प्रत्यवसरं 'बाढमि'त्येव प्रत्यभाषे । कथं खलु सम्भवी मम लक्ष्यस्य तेषु वस्तुषु बन्धसद्भावः ? यदपि भाषितव्यमभवत् सैवाभाषत । आत्मप्रेरणया नाहं किमपि तामपृच्छम् । प्रश्नस्तु तदैव पृच्छ्यते यदा मनसि कस्यापि वस्तुनो विषये किमपि जिज्ञासितव्यं वा, किमपि कुतूहलं वा, किमप्यौत्सुक्यं वा भवति । परं यदा मदीयं मनोऽन्यैरेव कैश्चिद्विषयैराक्रान्तमासीत्, तदा तत्र जिज्ञासितव्यादिकस्य कृते कुत एवावकाशः ?

अहमेतावन्मात्रमजानाम् यद् अहं बेंगलूरनगरवर्तिषु केष्वपि प्रदीर्घेषु, व्यायतेषु, वक्रेषु, चक्रभ्रमवत्सु च कुटिलेषु वर्त्मसु परिभ्राम्यामि । कुसुमलक्ष्मीः सहानुवर्तते । परं क्व गच्छामि, किम् पश्यामीत्येवमादिनिबन्धनाद् बोधाद् विरहित एवासम् सर्वथा ।

"शृणोतु !" कुसुमलक्ष्मीः प्रावोचत् ।

"बाढम् भवति !" अहमवोचम् ।

"कः पुनर्विचारो भवतः —"

"बाढम् भवति !" अहं मध्य एवावदम् ।

"—अथ प्रतिनिर्वर्तितव्यमिदानीमुत पर्यटितव्यमितोऽपि कञ्चित्कालम् ?"

"बाढम् भवति !"

"इतोऽपि पर्यटितव्यमित्येतदुक्तं भवति किम् ?"

"बाढम् भवति !"

आवामितोऽपि कञ्चित्कालं तथैव पर्याटाव ।

"वरं शृणोतु । अथ प्रतिनिर्वर्तितव्यमिति मनसा करोमि । पुष्कलः समजायत विलम्बः पर्यटतोरावयोः । स्वस्थानाच्च प्रभूतं दूरं समागच्छावावाम् ।" सा प्रास्तौत् ।

"बाढम् भवति !" अहमन्वमोदे तदीयमुक्तम् ।

"पद्भ्यामेव प्रतिनिवर्तनं परिहृत्य नगरयानेन प्रतिनिवर्तेवहि चेच्छोभनं भवेदिति मे मतिः ।"

"बाढम् भवति !"

किमुक्तं 'नगरयानेने'ति ? हन्त भोः, नगरयाननामसंशब्दनसमकालमेव व्याहता मे निष्क्रिया विचारशृङ्खला । भूयोऽपि सक्रियां विचारभूमिकां प्रत्यपद्ये । मस्तिष्काभ्यन्तरे सुचिरं व्याप्तो धूमपटलोऽपागच्छत् । किमस्ति मम कर्तव्यं साम्प्रतमिति सुस्पष्टं समजायत ।

"किं स्थानं खल्विदम् ?" अहं प्रतिबुद्धः सन्नपृच्छम् ।

"इदं खलु विश्वेश्वरपुरम्—"

"अम्, इदमेव किं विश्वेश्वरपुरम् ?"

"कुत एतत् ? कस्मादुदभ्राम्यदिव भवान् ?" कुसुमलक्ष्मी-रपृच्छत् ।

"क्षन्तुमर्हति तावन्मां भवती । अपरमेकं प्रष्टुमिच्छामि भवतीम् ।"

"आदिश्यताम् ।"

" 'वेदधर्मप्रसाराश्रमा'ख्यं भवनमत्रैव क्वापि वर्तते । नैवैतत् ?"

"बाढम् महाभाग ! तत्र पश्यतु । तन्नगरयानं गच्छति न वा, तस्मात्स्थानादनतिदूरमेव वामतो राजमार्गं यदप्येकं बृहदाकृति भवनं तिष्ठति तदेव तत् । तत्र स्थूलेषु देवनागराक्षरेषु लिखितं तदीयं नामापि तत्रत्ये सङ्केतफलके पारयिष्यति भवान् द्रष्टुम् ।"

"ततयो धन्यवादानाम् !" अहमवदम् ।

रायचूरनगराद् बेंगलूरनगरं प्रति प्रस्थातुकामे मयि तत्रत्या जना मामस्मिन्नेव भवने स्थातुमुपादिशन् ।

कश्चनापि सुदुष्करो व्यतिकरः खल्वेवं सुकरो भविष्यति विनाऽपि यत्नेनेति नासीत्कृतं चेतसाऽपि मया ।

अहं कुसुमलक्ष्मीमपृच्छम्—"अथ क्व पुनर्भवती यास्यति ?"

"स्वकीयमावसथं—मल्लेश्वराख्ये नगरभागे ।"

मनस्येवाहं द्विर्वा त्रिर्वा 'मल्लेश्वरे'ति नाम व्याम्रेडयम् येन तद्विस्मरणं मा भूदिति । को वेत्ति प्राप्ते ह्यवसर इदमपि नाम मामुपकुर्यादिति ।

अत्रान्तरे मल्लेश्वरगामिनगरयानं तत्रैव सम्प्राप्यत ।

तदारोढुमनसां जनानामासीद् अतिशयितः सम्मर्दः । स्त्रीदाक्षिण्यवशात् पुरुषाः सौजन्यपूर्वकं तत्रावस्थितं स्त्रीजनमेवादौ नगरयानमारोहयन् । ताभिः सह कुसुमलक्ष्मीरपि नगरयानमारोहत् । न वेद्मि कयाऽविज्ञातया प्रेरणया नगरयानारोहणात्पूर्वं सा मम हस्तमेकदा सुदृढं स्वहस्तेनागृह्णात् । किञ्च तत्कालमेव विमुच्य त्वरितं सा नगरयानाभ्यन्तरे न्यविशत । जना आरोहन्ति स्म । अतिशयितेऽपि जनसम्मर्दे बहुभ्यो जनेभ्योऽग्रतः स्थितत्वाद् अहमवश्यं नगरयानमारोक्ष्यामीति कुसुमलक्ष्मीर्दृढं व्यश्वसत् । जनसम्मर्दस्तु नगरयानेऽपि नासीदल्पीयान् । एतादृशं साङ्कटिन्यमासीत्तत्र येन के जना नगरयानमारोहन् के च नैवाशक्नुवन्नारोढुमिति ज्ञानं पुरतः स्थितानां जनानां दुःशकमासीत् । अहं स्वेच्छयैव पङ्क्तेर्दूरमपासरम् किञ्च पश्चाद्वर्तिभ्यो जनेभ्य आरोहणस्यावसरं प्राददाम् । जनैरापूरिते नगरयाने यानप्रबन्धकः खल्वितोऽप्यारोढुं यतमानान् जनानवारुणत् । प्रबन्धकस्य चारोढुमनसां च यात्रिणां मध्ये व्यावक्रोशी प्रारभ्यत । केचिद् यात्रिणो यानप्रबन्धकस्यावरोधनं तृणाय मत्वा यानाभ्यन्तरे प्राविशन् । एतेन व्यावक्रोशी खल्वितोऽपि तीव्रतराऽभवत् ।

कुसुमलक्ष्मीरग्रिमतम आसने यानखडक्किकासमीपं न्यषीदत् । व्यावक्रोश्याः कारणादुपलब्धस्य कालस्य लाभं प्रेप्सुरहं कुसुमलक्ष्म्याः खडक्किकायाः समीपं गत्वा तामाभाषितुकामः प्रावोचम् —"यदपि खल्वद्य स्नेहरसातिषिक्तं ममातिथ्यं समाचरद् भवती तदर्थं कैः शब्दैर्मदीयां कृतज्ञतां व्यक्तीकुर्याम् ? नूनं भवत्या समाचरितमिदमातिथ्यं भवतीञ्चापि यावज्जीवं नैव प्रभविष्याम्यहं विस्मर्तुम् ।"

"कुत एतत् ? नाशक्नोत्किम्भवान्नगरयानमारोढुम् ? अहमपि तर्ह्यवरोक्ष्यामि नगरयानात् ।" एवं व्याहरन्ती सा स्वासनादुदतिष्ठत् । प्रायतत चापि निष्फलं नगरयानगतं तत्साङ्कूटिनं भित्त्वा बहिरागन्तुम् ।

अस्मिन्नेवान्तरे यानप्रबन्धको यानसञ्चालनार्थं यानचालकं समदिशत् । प्रातिष्ठत नगरयानम् । अहमपश्यम् तदानीमपि नगरयानगतं जनसम्मर्दं स्वीयेनांसेनापसारयन्ती कुसुमलक्ष्मीर्यानस्य पश्चिमे भागे स्थितवन्तं यानप्रबन्धकमुपसर्पितुं नितान्तं प्रयतते स्मेति ।

नूनं नगरयानप्रवेशात्पूर्वं तया विहितं करस्पर्शं, नगरयानप्रस्थानोत्तरकालं यात्रिभिः सह समाचरितमंससंघर्षं, संघर्षसमये चावलोक्यमानां तदीयां मुखमुद्रां नाहं शक्ष्यामि विस्मर्तुम् ।

## तृतीयः समुच्छ्वासः ।

तस्मात्स्थानान्निर्गत्याहं सरलं वेदधर्मप्रसाराश्रमस्य प्रवेशद्वारं सम्प्राप्नवम् । परं स्वेच्छयैव तदभ्यन्तरं नागच्छम् । तद्भवनपरिसरं सम्यक्तया निरीक्ष्य सर्वमप्यभिज्ञानजातं स्वमस्तिष्काभ्यन्तरे न्यदधाम् येन भूयस्तद्गवेषणे क्लेशो मा भूत् । तदनन्तरं तस्मात्स्थानादग्रे सुदूरं क्वापि निरगच्छम् । निरुद्देश्यमेव द्वित्रा होरा इतस्ततोऽभ्राम्यम् ।

एकस्मिन् स्थाने मनोहरः खल्वेकः किञ्चातिमात्रं लघुरा-

रामोऽदृश्यत। दिष्ट्या तत्रारामे पादपस्यैकस्याधस्ताद् रिक्ता खल्वेका काष्ठशिला[1] दृष्टिपथमगच्छत्। परिभ्राम्यन्नहमतिवेलमश्राम्यमिदानीं यावत्। तस्मात्तस्यां काष्ठशिलायां सम्भारपरिपूर्णं स्वकीयं प्रसेवमुपधानीकृत्याहमशयि। पाणिपादं च व्यश्लथयम्। अविलम्बितमेव गाढं न्यद्राम्। तथा न्यद्राम् यथा नाहमजानाम् कदा रात्रिरभवत् कदा चार्द्धरात्रम्। अहं तदानीं स्वप्नानपश्यमाहोस्विदन्यदेव किञ्चिदिति न वेद। इत्थं प्रत्यैयत यत्कश्चन मां भृशं निर्मथ्नातीव। अहं प्रतिबुध्योदतिष्ठम्। अर्द्धरात्रगते तस्मिन्विनिःस्वने तमसि विद्युद्दीपानां नेत्रप्रदीपकस्य प्रकाशस्याऽऽरामस्थितानां च प्रांशूनां द्रुमाणां छायाया अपूर्वः कश्चन सम्भेदः परिस्थितेरपूर्वतामितोऽप्यधिकं व्यतनुत।

अहमपश्यम् यद् मम समीपमेव यामिकः खल्वेकः क्रोधाध्मातो मां प्रहर्तुमुद्यतस्तिष्ठति। एवं प्रत्यैयत यदञ्जसैवासावुभाभ्यामपि स्वहस्ताभ्यां मम ग्रीवां गृहीत्वा निष्पीडयिष्यति। तथापि नाहमबिभयम्। शान्तेन चेतसा काष्ठशिलाया उदतिष्ठम्। अजृम्भे। परमेश्वरप्रेरितः कश्चन सहाय एवाऽयं भवेदिति धिया तं यामिकमवालोकयम्। स्वकीयेन स्वाभाविकेन कण्ठस्वरेणाऽहं तमपृच्छम्—"भद्रमुख, किमस्ति वृत्तम्? को भवान्?"

"त्वं कोऽसि?" अत्यन्तमसद्वृत्ततया स मामेव प्रत्यपृच्छत्।

"पथिकोऽस्मि।"

---

१. काष्ठशिला='बेंच' इत्यर्थः।

"त्वं कुत आयाः ? अत्र च किङ् कुरुषे ?"

"अहं दक्षिणहैदराबादतः समायाम् । ह्यो रात्रावेव वाष्पगन्त्या नगरमिदमागतः । शयनीयस्थानान्तराभावं पश्यन्नत्रैवाशयि ।"

"न जानासि किम् रात्रावत्र शयनस्यादेशो नास्तीति ?"

"प्रागेव न्यवेदयम् यदहं परदेशीयोऽस्मि । अत्र शयनस्यादेशो वर्तते न वेति सर्वथा नैव जानामि ।"

"त्वं चौरोऽसि । किमस्मिन्प्रसेवे तिष्ठति ?"

"कानिचिल्लेख्यपत्राणि कानिचित्परिधानीयवस्त्राणि च । अहं चौरो नास्मि । पथिकोऽस्मि सर्वजनसाधारणः ।"

"नैतदस्ति । त्वं चौरोऽसि । शठोऽसि । नूनं विप्रतिपन्नया धिया कयाप्यत्र समायातोऽसि ।"

"कथङ्कारं प्रबोधयेयं त्वां यदहं भद्रपुरुषोऽस्मि । चौरो नास्मि । मामवलोक्य किं यत्सत्यमहं चौरोऽस्मीति त्वदीया बुद्धिस्त्वामुपदिशति ?"

"चौराणां ललाट 'एष चौर' इति लिखितं भवति किम् ? यदि भद्रपुरुषस्त्वमभविष्यस्तर्हि कस्यामपि समीचीनायां पान्थशालायामस्थास्यः; कस्यापि भद्रनागरिकस्यावसथे न्यवसिष्यः । सार्वजनिकारामगतासु काष्ठशिलासु शयानो रात्रिवेलायां कश्चनापि जनोऽर्हति किम् भद्रपुरुषो भवितुम् ?"

तस्य भाषितं मृषा नासीत् । कश्चनाऽपि भद्रपुरुषोऽर्धरात्रे कस्मिंश्चिदपि सार्वजनिकारामे शक्नोति किमनया रीत्या स्थातुम् ? भद्रपुरुषो भवेत्तर्हि नगरस्थितान् कांश्चिद् भद्रपुरुषान् परिचिनुयादेवासौ । तेषामावसथेषु तस्य निवासस्य समुचितः

प्रबन्धो भवेत्। असत्येतस्मिन्, तस्य परिधानसेवके द्रव्यन्तु स्यादेव येनाप्यसौ स्वकीयं निवासासौकर्यादिकं प्रबध्नीयात्। मम परिधानसेवको रिक्त एवासीत्। नासीत्काणवराटकोऽपि तदभ्यन्तरे। तादवस्थ्ये कथमहमात्मानमर्हामि भद्रपुरुष इति समर्थयितुम् ?

अहं पराजये। न किमपि प्रत्यभाषे। तूष्णीमवातिष्ठे।

"अवश्यं त्वदीये प्रसेवे किमपि चौर्योपनीतं वस्तु भविष्यति। इतो दर्शय त्वदीयं प्रसेवम्।"

अहं मदीयं प्रसेवं तस्य हस्ते समक्रामयम्। विद्युद्दीपस्तम्भस्यैकस्याधस्तान्नीत्वा तं प्रसेवमसाववाङ्मुखीचकार। तत्रासावन्यौ द्वौ लघुतरौ प्रसेवावपश्यत्। तयोरन्यतरं पुनरवाङ्मुखीचकार। परिधानीयानि द्वित्राणि वस्त्राण्युदपात्रं चैकं विहाय नान्यत्किमप्यसौ द्रष्टुमक्षमत। द्वितीयमपि तथैवावाङ्मुखीचकार। तत्रोपचतुरा लेख्यपत्रसञ्चिका अवर्तन्त। नान्यत्किमप्यवर्तत। कदाचित्तासु सञ्चिकास्वेव क्वापि काश्चित्पत्रमुद्रा निलीय वर्तेरन्नित्याशङ्क्य स प्रतिपत्रं सञ्चिकास्ता अगवेषयत्। परं लभ्येत तदैव किञ्चित्तत्र—वर्तेत यदा किञ्चित्तत्र !

अहमवदम्—"भद्रमुख, किमिदानीं खल्वप्यविश्वसनीयानि प्रतीयन्ते मम वचांसि ?"

"त्वं तावदसामान्यः शठः प्रतिभासि। त्वया परिहितानां वस्त्राणां परिधानसेवका अपि गवेषणीया भवन्ति।"

अहं मनस्येव हसितुमारेभे। जीवितमपीदं कीदृशैरद्भुतैर्व्यतिकरैः समाकुलं वर्तते। क्वचित्तथाविधान्यपि वस्तून्यङ्गीकरणीयानि भवन्ति यान्यशोभावहानि पुरुषसम्मानविलोपकानि

च स्युः ।

अहं तस्यैतद्वचनमङ्गीचक्रे । अहमवोचम्—"भद्रमुख, इदमपि प्रतिपद्यतां भवान् । कदाचिदेतेनैव प्रतीयाद् भवान्मम वचसां पारमार्थ्यम् ।"

अतीव व्यपत्रपतया मम परिहितानां वस्त्राणां सर्वानप्यसौ परिधानसेवकानगवेषयद् भृशं पर्यक्लिश्यच्चाप्येतदालोक्य यदेकस्य कुब्जस्य कार्षापणस्यापि खनत्कारः क्वापि श्रुतिगोचरो नैव भवति ।

अञ्जसैव पर्यचिन्वि यन्नाहमासम् चौरः; चौरस्तावदसौ स्वयमेवासीद् यामिकव्यपदेशेन चात्रागमद् मां लुण्ठितुमीहमानः ।

अत्रान्तरे कश्चिदप्येको गुरखः[1] कुतश्चिदपि तत्रैव समायाद्, यत्रावामतिष्ठाव । तद्दर्शनसमकालमेव चौरमहाशयस्य प्राणाः स्वस्थानादुत्क्रमितुमारेभिरे ।

"यूयं कोऽस्ति ? अत्र च किं करोति यूयम् ?"[2] आगमनसमकालमेव स गुरख आवामपृच्छत् ।

"इमे यामिकमहाभागा मद्वस्तुगवेषणां कुर्वन्ति । अहं चौरः शठश्चेत्यत्रभवतां यामिकमहाभागानां मतम् ।" अहं निर्भयमकथयम् ।

"चौरः शठश्च ? कोऽस्ति चौरः ? कश्चायं यामिकः ? अये, यूयं कुत्रत्यो यामिकोऽस्ति ?"[3] यामिकवेषधारिणं तं चौरं

१. गुरखः=नेपालदेशवास्तव्यः । [गोरक्षनाथसाम्प्रदायिकत्वाद्यदभिधानं तद्देशवास्तव्यैः प्राप्तं, तस्यैवापभ्रंशः खल्वयं शब्द इति बोद्धव्यम् । ]
२. 'युवां कौ स्थः ? अत्र च किं कुरुथो युवामि'ति सुव्याकृतं वाक्यम् ।
३. 'त्वं कुत्रत्यो यामिकोऽसि' इति सुव्याकृतं वाक्यरूपम् ।

लक्ष्यीकृत्यासावभ्यदधात् ।

चौरः पलायितुकामः समजायत । परं नासीदीषत्करम् पलायनम् । अकालक्षयमुत्प्लुत्यासौ गुरखस्तस्य चौरस्य ग्रीवामगृह्णात् । एकेन चैवाघातेन तं भूमावपातयत् । मामुद्दिश्य गुरखः प्रावोचत्—"एषा चौरा श्याला यूयन्दृशं कांगरेसीकं वस्तुगवेषणां कुरुते ? जीवमपहरिष्यामि अस्या"[1] दृढं च प्राहरद् द्वे मुष्टी तस्य चौरस्य नासिकायाम् ।

"महाभाग, यूयमपि प्रहरतु गर्दभलत्तिकामस्या । पूर्णतया खल्विमामायत्ता कृतवानस्ति ।"[2] गुरखो भूयोऽप्युच्चैः प्रावोचत् ।

परं मम तु नासीत्कश्चनाऽपि लत्तया प्रहर्तव्यः । अहं तूष्णीमेवातिष्ठम्—निष्क्रियः प्रेक्षक इव । परं गुरखस्येतोऽपि धमधमायते स्म दुष्प्रधर्षोऽमर्षवह्निः । आदौ तावदसौ तं चौर-मुभयोरंसयोर्गृहीत्वा द्विस्त्रिर्वा तरसा भूमावक्षिपत् । ततस्तं परित्यज्य सहसैवोत्थाय स्वीयेन धृतकृत्तिपादत्राणेन दक्षिणप्रपदेन भीष्ममेकं प्रहारं तस्य चिबुके प्राहरत् । वराकश्चौर एतेन प्रपदप्रहारेणातिवेलं व्यह्वलत् । चूर्णितं चिबुकन्तस्य किञ्च रुधिरं तस्मात्प्रवोढुमारेभे ।

इतोऽप्येकः प्रपदप्रहारः ।

इतोऽप्येकः प्रपदप्रहारः ।

इतः खल्वप्येकः प्रपदप्रहारः ।

---

१. 'एष चौरः श्यालः भवादृशस्य राष्ट्रियमहासभानुयायिनो वस्तु-गवेषणां कुरुते । जीवमपहरिष्याम्यस्य' इति सुव्याकृतं वाक्यरूपम् ।

२. 'महाभाग, भवानपि प्रहरतु गर्दभलत्तिकयैनम् । पूर्णतया खल्विममायत्तं कृतवानस्मि' इति सुव्याकृतं वाक्यरूपम् ।

"महाभाग, क्षुरक्कपाणिकामादाया जीवमपहरामि अस्या ! श्याला—शठा—शुण्ठा—युष्मान् चौरमपदिशति"[1]—गुरखः ।

इतोऽप्येकः प्रपदप्रहारः ।

अस्मिन्नेवान्तरे पार्श्वप्रतिवेशस्थानां वेश्मनां द्वाराण्यपाव्रियन्त । जनास्तत्रागत्य समवेता अभवन् । अह्नायैव तस्य चौरस्योपर्यात्मनो निपातयामासुः । लोकानामकल्पनीयं साङ्कटिनं सांराविणं च तत्राजायत । प्रपदप्रहाराणां चपेटप्रहाराणां च पर्जन्यवृष्टिरिव प्रादुरभवत् । वाक्प्रहाराणां तु कथैव का ?

दिष्टया मामभि नैव कस्यापि लक्ष्यमासीत् ।

अहं तस्मात् स्थानादेकतोऽपाव्रजम् । आलोचयम् किमिदानीं करवाणीति । अनतिदूर एवापरा खल्वेका काष्ठशिलाऽऽसीत् । तत्र गत्वासि । परमेश्वरं प्रार्थये कथमपि रात्रिरेषा निष्प्रत्यूहं व्यतीयादिति । अहमुदपश्यम्—चौरोऽयं निग्रहीष्यते ; केचन तं शणसूत्रबन्धैर्भन्त्स्यन्ति ; पुलिशवर्गोऽप्याह्वास्यते[2] ; स च सर्वमपि व्यतिकरं निरीक्षिष्यते ; गुरखं समग्रमपि वृत्तान्तजातं प्रक्ष्यति ; गुरखो मम नामापि संशब्दयिष्यते ; तदा पुलिशवर्गो मामन्वेषिष्यति; मामपि स तन्तसिष्यति ; किञ्चैवं व्यर्थमेवैको भीमाकृति-

---

१. 'महाभाग, क्षुरक्कपाणिकामादाय जीवमपहरिष्याम्यस्य । श्यालः चौरः···शठः···शुण्ठः···भवन्तं चौरमपदिशति ।' इति सुव्याकृतं वाक्यरूपम् ।

२. पुलिशवर्गः=पुरुषवर्गः । अत्र पुरुषशब्दस्येदं प्राकृतं रूपं स्वीकृतमस्ति रूढ्यपेक्षितत्वात् । पुरुषशब्दश्च 'राजनियोगपुरुष'पदार्थवाचकः । तथा हि—'राअनिओअपुलिशाः'='राजनियोगपुरुषा' इति मृच्छकटिके । 'पुलिशशहस्श हदं शुणीअदि'='पुरुषसहस्रं हतं श्रूयते' इति वेण्याम् ।

श्छिन्नबुध्नो ग्रीवायां मे तरलायिष्यत इति । नाहमस्मिन्विषमे विपन्महापङ्के स्वात्मानं निपातयितुमैच्छम् । तस्मादन्यत्र गमन एव श्रेय इत्यहममन्वि । परं क्व गन्तव्यमित्ययमेव तावदासीद् भीष्मः प्रश्नः ।

अहमभीक्ष्णमभ्यन्तरेण मनसा परमेश्वरं ध्यायन् वेदधर्मप्रसाराश्रमाभिमुखं प्राचलम् । अतिमात्रं विलम्बः समजायत । वेदधर्मप्रसाराश्रमवासिनो मम प्रवेशमनुमंस्यन्ते न वेत्यपरः प्रश्न आसीत् । पादयोर्जवो ववृधे । दिवा नगरमेतदपरिचितमिव प्रत्यभात् । परमिदानीं रात्रौ तदपरिचितं सदपि चिरपरिचितमिव प्रत्यैयत । काऽपि शक्तिरासीद् या मां मार्गं निरदिशत् किञ्च काऽपि शक्तिरासीद् या खल्वस्यां स्वनशून्यायां रात्रिवेलायां सहायभूता छायेव मामन्ववर्तत ।

यदाहं वेदधर्मप्रसाराश्रमस्य बहिर्द्वारं प्रत्यासीदम् तदा तत्र स्थितौ द्वौ छात्रावदृश्येताम् । मां विलोक्य न जाने केन प्रयोजितौ तौ नमश्चक्राते । नमस्कुर्वाणौ ताववलोक्याहं सुमुग्धमस्मये ।

एको जनस्तावदस्यां रात्रौ चोरङ्कारमाक्रुश्य मामवगणयामास। किञ्चास्यामेव रात्रौ छात्राविमौ विलोकनसमकालमेव मां प्रणामार्हं मत्वा सविनयं प्रणेमतुः । सैवासीद्रात्रिः। परं तस्यामेव रात्रौ द्वे परस्परविरुद्धे वस्तुनी अन्वभवमहम् । 'दृष्ट्यां दृष्ट्यां कीदृशो वस्तुभेदः !'

"अभ्यन्तरे चलिष्यति न वा ?" तयोरेकतरः सातिप्रश्रयं मामांग्लभाषायामपृच्छत् ।

अहमप्यांग्लभाषायामेव प्रत्यवोचम्—"बाढम् ।"

"अधुनैवावयोः सहाध्यायी समागत्याभ्यन्तराद् द्वारमपा-

वरीष्यते ।" द्वितीयश्छात्रः प्रावोचत् ।

"कुतः खलु भवन्तावेतावता विलम्बेन समायातोऽस्यां रात्रिवेलायाम् ?" तावहमांग्लभाषायामपृच्छम् ।

"आंग्लभाषागतमेकं छायाचित्रं विलोकयितुं कटकमगच्छाव। बलवता कारणेन केनापि प्रत्यागमने महान् विलम्बः संवृत्तः। अथ भवान् कुतः समायाति ?" द्वितीयश्छात्रोऽभाषत ।

"अहं दक्षिणहैदराबादतः समायामि। अहमपि कारणेन केनापि खल्वत्रागमनेऽतिवेलं व्यलम्बे ।" अहं प्रत्यभाषे ।

अत्रान्तरे बहिर्द्वारमपाव्रियत । वयं त्रयोऽप्यभ्यन्तरे न्यविशामहि । अभ्यन्तरादागतश्छात्रो मामभ्यवादयत । कियानिव विनम्रः, कियानिव च सुसंस्कृत आसीत्तस्य व्यवहारः ! मम हृदयं मानवजीवितस्यैतादृशं सुपरिष्कृतं रूपं विलोक्य गद्‌गदितं समजायत ।

वयमभ्यन्तरे प्राविशाम। विशाला खल्वेका शाला[1] तत्रावर्तत । तस्या भित्तिषु कपाटिका[2] आसन् । छात्रास्तासु कपाटिकासु स्वकीयं वस्तुजातं वस्त्रसम्भारादिकं स्थापयामासुः। तत्रैव मध्यभाग आस्तीर्णायां बृहत्यां स्तर्यायां[3] स्वकीयान्युपस्तरणानि[4] प्रसार्याशेरत ।

त्रयोऽपि ते छात्रा द्रमिडा आसन् । यौ छात्रौ बहिष्टादागच्छताम् तयोर्नामनी यथासंख्यं रामभद्रो रामानुजश्च ।

---

१. शाला='हॉल' इत्यर्थः ।

२. कपाटिका='अलमारी' इति भाषायाम् ।

३. स्तर्या=आस्तरणी । 'दरी' इति भाषायाम् ।

४. उपस्तरणम्='बिस्तरा' । [ओ३म् अमृतोपस्तरणमसि स्वाहा ।]

यस्त्वभ्यन्तरादागच्छत् तस्य नाम वेङ्कटराम इति । ते पार्श्ववर्तिनो जनपदस्य कस्यापि निवासिन आसन् । अध्ययनादिकार्थं ते नगरमागच्छन् । वासार्थमितरत्र सौविध्यसमन्वितस्य स्थानस्याऽभावं पश्यन्तोऽत्रैव वासं स्वीचक्रुः ।

वेङ्कटरामो मम हस्तान्मदीयं प्रसेवमाददे । तं स्वकीयायां कपाटिकायां सम्यक्तया न्यस्य स मामुपेत्यावोचत्—"भवाँस्तु धर्मप्रचारकः । नैवैतत् ?"

"ओम् । अस्मि तावद्धर्मप्रचारक एव । परमिदानीं तु बेंगलूरनगरदिदृक्षया समायातोऽस्मि । धर्मप्रचारस्यापि कार्यक्रमो निर्धार्येत तर्हि तमपि कर्तुं पारयिष्यामि ।" सस्मितमहमभाषे ।

"अपि पानीयं कामयते भवान् ?" आतिथ्यभावनया विनम्रतापूर्वकं स मामपृच्छत् ।

"अवश्यम् ।" अहमभाषे ।

स्वकीयस्योपस्तरणस्य सकाशमेवासौ ममाप्युपस्तरणमस्तृणात् । काचकंसे चैकस्मिन्नलिञ्जरादादाय शीतलं पानीयमुपानयत् । नूनमातिथ्यभावनया विहीनेभ्योऽनेकाभ्यर्हितोपचारेभ्योऽपि भावनोपेतेन मनसा प्रस्तुतं काचकंसमितं शीतलं पानीयमधिकमभ्यर्हितं भवति । अहं समतृप्यम् ।

छात्रा अशेरत । अहमप्यशयि । अशयि सर्वाः खल्वप्यग्रगताः पृष्ठगताः सुचिन्ता दुश्चिन्ताश्च सर्वथा विस्मृत्य । यथा हि कश्चन विक्रीताविक्रेतव्यः पण्यविक्रयिकः शेते ।

× ×

प्रातस्त्वरितमेव शय्याया उदतिष्ठम् । स्वगृहे तिष्ठामि तदा खल्वेवङ्कारं द्रागुत्थानं नैव सम्भवति । परं प्रवासे सत्वरमेव

जागरा प्रत्युत्पद्यते । सर्वेभ्योऽपि प्रातर्विधिभ्यो निवृत्तोऽभवम् । अस्नाम् । मस्तिष्कं प्रत्यग्रतामभजत ।

वेदधर्मप्रसाराश्रमाधिकारिणो द्रष्टव्या आसन् । मन्त्रि-महाभागो नगराभ्यन्तरे नासीत् । तस्मात्प्रधानमहाभागमपश्यम् । स बहिरङ्गभावेन प्रसादं व्यक्तीकुर्वन्नपि न कमपि मम धर्म-प्रचारकार्यक्रमं निरधारयत् ।

रायचूरवासिनोऽन्यस्याप्येकस्य स्थानस्य नाम संशब्दया-म्बभूवुः । तदासीत् 'श्रीरामपुरमि'ति । अहं प्रधानमहाभागं तत्रैव मां प्रेषयितुं प्रार्थये । तत्र 'लोकहितकारिणी' नामैको वर्तते निकायः । तत्र गन्तुमावश्यकं मार्गव्ययं तमहमयाचे ।

मम द्रव्योपहस्तिकायां द्रव्यं लेशेनाप्यभविष्यच्चेन्नाहमेवंविध-मपगतलज्जं कर्म समाचरिष्यम् । परमधुना खल्वन्तरेण याच्ञां नासीदभ्युपायान्तरम् । सार्वजनिकं समुदाचारमवलम्ब्य प्रधान-महाभागो मम प्रार्थनायाः प्रागेव स्वयं मदीयं मार्गव्ययं प्राभन्त्स्यच्चेद् उचिततरमभविष्यत् । यावता नैवावालोक्यत तादृशं किमपि लक्षणं, तावता स्वयमेव व्यवास्यमहं द्रव्ययाच्ञां कर्तुम् । आलोचयम् श्रेष्ठी तावद्वर्तत एव; मम याच्ञायां स महाभागः स्वकीयमौदार्यं प्रकटयितुं कनिष्ठतया पञ्चषाणि-रूप्यकाणि तावदवश्यं प्रदास्यति मह्यमिति । मादृशाय कफल्ल-काय[1] तावदपि द्रव्यं सुपर्याप्तमभविष्यत् । परमसौ केवलं चतुराणिकामेव (या हि सर्वेषां परिधानसेवकानां विगाहनेना-तिमात्रं काठिन्येनालभ्यत) मह्यमददात् । इमां प्रयच्छतोऽपि तस्य प्राणाः कथमपीड्यन्तेति मन्य ईषत्करमवकल्पयितुम् ।

---

१. कफल्लकः=अकिञ्चनः ।

अज्ञोऽपि लघुनोपायेन तां पीडां शक्नुयादवगन्तुम्। सत्यं खल्वेतत्, यावत्कालमेतावानतलस्पर्शो न भवेन्मानसिको गर्त्त-स्तावत्कालं नहि लक्ष्म्याः समुद्गाढस्तरलश्च पूरोत्पीडः शक्यते क्वाप्येकान्ततयाऽवस्थातुम्।

अहं खल्वनया चतुराणिकाप्राप्त्या भृशमतुष्यम्—रिक्तायां द्रव्योपहस्तिकायां किञ्चित्तु द्रव्यं प्रत्यपद्यतेदानीमिति। इदं प्रददतः कस्यापि मनः प्रसीदेद्वा विषीदेद्वा—मम किन्तेन ?

अथ मनस्येव नाहं नगरयानादिकं किमप्यारोक्ष्यामि, पद्भ्या-मेव पर्यटिष्यामि किञ्च रक्षिष्यामि तथैव चतुराणिकामिमामिति सम्प्रधार्य बहिरायाम् राजमार्गे। विश्वेश्वरपुरवर्ती खल्वेष घण्टा-पथः। कियान्मनोहरः। उभयतः सघनच्छायाः पादपाः। मध्यतः सुदूरं धावमानो वज्रलेपविनिर्मितोऽजस्रो घण्टापथः। उभयो-रपि पार्श्वयोर्निष्कुटश्रेण्यस्तत्परिवारिताश्च नवनवाकल्पशालिन आवसथाः। भारतस्य वर्षस्य किमपि नगरं स्वीयया मनोज्ञया सुबोध्यया च रचनया नगरमिदं शक्नोति सर्वथा प्रत्यादेष्टुम्।

मम सर्वमपि वस्तुजातं वेङ्कटरामस्य कपाटिकायां सुरक्षित-मासीत्। इदानीं सर्वथा निश्चिन्त आसमहम्। नासीत्किमपि वोढव्यमधुना शरीरेण वा मनसा वा।

प्रवाससमये जनः सर्वथा रिक्तहस्ततां व्यपगतवोढव्यतां च स्पृहयति। निष्प्रयोजनेन वस्तुसमुच्चयेन न केवलं शरीरस्य किन्तर्हि मनसोऽपि भारहारत्वं प्रतिपद्यते। एतस्मादेव कारणात् प्रमाणाधिकं वस्तुजातमादाय प्रवासायाभिनिष्क्रमणं नाहं कदाप्यनुमन्तुमुत्सहे। अभिशापसमः खल्वेष प्रमाणाधिक-वस्तुसमुच्चयः सर्वदा परिहर्तव्य एव भवति मम।

बाढम् । इतोऽप्येकं निवेदनीयम् । वस्तुजातं स्वकीयं निहितं भवेत्कुत्रापि परं न भवेत्तत्सुरक्षितम्, तेन भूयोऽपि प्रतिपद्यते मनसो भारहारत्वम् । न तावत्कालं तदपगच्छति, यावत्कालं स्वचक्षुर्भ्यां नैव भूयोऽपि भवान् प्रतिवीक्षते तत्सर्वम् । किञ्च भवति ? कणिकाप्रमाणमपि तन्मनसो भारहारत्वं कृत्स्नमप्यानन्दं प्रवासजनितं सर्वथा हिनस्ति; सर्वथा निःसत्त्वं विधत्ते ।

भवतु । मदीयं तावद्वस्तुजातं वेङ्कटरामस्य कपाटिकायां सुरक्षितमासीत् । बहिर्निष्क्रमणात् पूर्वं तमहं निरदिशमपि न ममागमनं प्रतीक्षणीयमिति ; नापि प्रत्यागच्छेयमद्य तर्हि श्वस्तु प्रत्यागमिष्याम्येवेति च । एतावता, शरीरेण मनसा च सर्वथा व्यपगतभारः स्वात्मानमतिमात्रं प्रहृष्टमन्वभवम् । अकरवम् चापि मनसा—निश्चिन्तः सन्निदानीं बेंगलूरनगरं वीक्षिष्ये निर्भरं च वीक्षणानन्दमनुभविष्यामीति ।

विश्वेश्वरपुरान्निष्क्रम्य प्रधानकुट्टिमपण्यवीथिकामगच्छम् ।[1] तस्मात्स्थानाद् बाष्पगन्त्रीप्रस्थानकम् । बाष्पगन्त्रीप्रस्थानकाच्च मल्लेश्वराख्यनगरभागगतं पञ्चमं वेधमार्गम् ।[2]

सर्वप्रथममहं राजमार्गेषु दृष्टिमबध्नाम् । तदनन्तरं तत्पार्श्वगतेषु विद्युद्दीपस्तम्भेषु । तदनु नगरयानेषु । तत्पश्चात् पद्यासु ।[3] तत्र संसर्पत्सु जनेषु । तेषां वेशविन्यासे । सर्वशेषे च तेषां भाषायाम् । अत्रागत्य मम मन ऐकाग्र्यं जगाम । वर्त्मनि क्वापि संस्तभ्याऽऽराद् व्रजतां जनानां लपितं समनोयोगमश्रृणवम् ।

---

१. कुट्टिमपण्यवीथिका='मार्केट' इत्यर्थः ।

२. वेधमार्गः='क्रॉस रोड' इत्यांग्लभाषायाम् ।

३. पद्या=Foot path इत्यांग्लभाषायाम् ।

वयोवृद्धविप्राणामालपितादारभ्य ह्यवरवर्णानामगृहीताक्षराणां च व्याहारं यावत् सर्वेषामेव जनानां भाषितं समनोयोगमशृणवम् । सत्यं ब्रवीमि तत्सर्वं श्रुत्वा मनः कयाऽप्यभिध्यया चेर्ष्यया च पर्यपूर्यत । विप्रतीसारोऽप्यन्वभूयत—हन्त, एतादृशी भारती मां कस्मान्न प्रत्यपद्यतेति । क्वचिद् बालाः खेलाहेलादिकेषु निमग्ना आसन् । तेषां मुखेभ्यो निःसरन्तीं सुबोध्यां मनोरमां च गिरमाकर्ण्य नाहं तृप्तेरन्तं जगाम । एतादृशी शुद्धा, सुव्याकृता, सम्यगुच्चारिता च भाषा मामेतस्मिंस्तावज्जन्मनि नैव प्रतिपत्स्यत इत्यालोच्याऽव्यथेऽपि ।

अत्रत्यानां मोहम्मदीयानां हिन्दीभाषामप्यशृणवम् । ते परस्परं हिन्दीभाषायामेव भाषन्ते । परं दाक्षिणात्या भाषास्तासां हिन्दीभाषायास्तथाकारमुपास्कुर्वत यथा ह्युत्तरभारतीयास्तां भाषामाकर्ण्य वैचित्र्यं किमप्यभूतपूर्वमवश्यमनुभविष्यन्ति ।

भाषेति वस्तु मम सार्वकालिकं परमाकर्षणस्थानम् । सविशेषं च शुद्धा सुसंस्कृता भाषा । यः खल्वपि तादृशीं भाषां भाषते तस्मिन्किमप्यवर्णनीयमार्यत्वमाविर्भवति । येऽपि खल्वेवङ्कारमार्यत्वगुणोपेतास्ते मादृशस्याधमस्य मन्दभागधेयस्य च जनस्य सविशेषं प्रणम्या भवन्ति ।

अभिजानामि बेंगलूरनगरवासिनां कन्नडभाषामाकर्ण्य यादृशी मम मनोदशाभूत्, तादृशीमेव दशामहं पुण्यपत्तने तन्नगरवास्तव्यानां मराठीभाषामकर्ण्य, लक्ष्मणपुरि प्रयागनगरे च तत्रत्यानां हिन्दीभाषामाकर्ण्यानुभविष्यामि । तस्मान्मनस्येवैतन्नगरमेभिर्नगरैः सह तुलयितुमारेभे । सविशेषं च पुण्यपत्तनेन सह । अन्यासु वार्तासु तेन सहेदं तुलितं भवेद्वा न वा—नगरयानानां

विषये तु भवेदेव । बेंगलूरनगरगतेषु नगरयानेषु पुण्यपत्तनगतेषु नगरयानेषु च नासील्लेशेनाऽपि व्यत्यासः ।

भवतु । कन्नडभाषा खल्वेकेन विधिना दक्षिणदेशस्था काण्डभाषा ।[1] हिन्दीभाषायाः काण्डभाषात्वं · कन्नडभाषायाः काण्डभाषात्वेन ह्यतिमात्रं संवदति । नास्ति खल्वेनयोर्द्वयोरपि भाषयोः स्वभावो नमनीयत्वगुणोपेतः ।[2] एतावता ह्यत्याधुनिक-लोकरुचेः सर्वथैवानुकूले खल्विमे उभे अपि भाषे । मराठी-भाषा खल्वपि काण्डभाषागुणोपेतैव ।

पञ्चमवेधमार्गाद् व्यावृत्य वामतो त्रिचतुरांश्चतुष्कानलङ्घ-यम् । पदे पदे सुवीथ्रां मनोहारिणीं च नगररचनां विलोक्य व्यस्मये । मैसूरराज्यनगरनिर्माणकृतां कुतःप्रत्यपद्यतैवञ्जातीयका मनोगता सुसंस्कारितेति प्रभूतमाश्चर्यमन्वभवम् ।

भवतु । तस्मात्स्थानादग्रतो गत्वा क्वाप्येकं सङ्केतफलक-मपश्यम् । एष फलकः कस्यापि हिन्दीप्रचारिनिकायस्यासीत् । अहेतुकमेव केवलं मनोविनोदार्थमहं तत्र प्राविशम् ।

"अपि निवेदयितुमर्हति भवान् कः खल्वस्य निकायस्य प्रधानाधिकारीति ?" अन्तः प्रविश्य सर्वप्रथमं दृष्टिमुपगतमेकं महानुभावमहमपृच्छम् ।

"अहमेव । निर्दिशतु किम्प्रयोजनमिति ।" स महानुभावः प्रत्यवोचत् ।

"अतीव सन्तोषस्य विषयः । नमस्ते ।"

"स्वकीयं प्रयोजनं निर्दिशतु ।" मम नमस्कारस्यानया

१. काण्डभाषा='खड़ी बोली' इति भाषायाम् ।

२. नमनीयत्वम्='लचकीलापन' इति भाषायाम् ।

रीत्याऽतिमात्रं नीरसं प्रत्युत्तरमदादसौ महानुभावः।

"प्रयोजनम् ?...प्रयोजनं तावत्तादृशं किमपि नास्ति। भवतो दर्शनमजायत—अयमेव महान् प्रसादस्य विषयः। अहमपि हिन्दी-भाषया किञ्चित्..."

"अयि भगवन्, 'हिन्दी-हिन्दी' इति क्रियासमभिहारं व्याम्रे-डतां जनानां गलो ग्रथनीयः। सर्वा खलु पाषण्डता।"

"भवान् स्वतो हिन्दीभाषायाः कार्यकर्ता—नैवैतत्किम् ?" ईषदाश्चर्येणापृच्छमहम्।

"अस्माकं खल्वपि मस्तिष्कमस्ति। वयं खल्वपि बुद्धिलेशा-दनपेताः स्मः। अस्माकं खल्वपि विद्यन्ते काश्चिद् भावनाः। महात्मा गान्धी महापुरुषश्चेद् भवतु नाम स्वस्थाने महापुरुषः। नैतेनैतदुक्तं भवति यद्वयं किमपि तदीयं वाक्यमेतदर्थमेव केवल-मभ्युपगच्छेम यावता महापुरुषः खल्वसौ भवतीति। किञ्च स्वमस्तिष्कं सर्वथा तद्धस्ते निक्षेपीकुर्वीमहीति।"

अतिमात्रं तीक्ष्णेनाग्निमयेन च कण्ठस्वरेणोदगिरदिमां वाचं स महानुभावः।

व्याघूर्णो एव नामाहम्। कीदृशं खल्विदं प्रत्युद्गमनम् ?

स भूयोऽप्यवोचत्—"वयं तावदमन्मह्यांगला एव नृशंसा इति। परमत्र पश्यामस्तेभ्योऽपि नृशंसतरास्त एव यान् वयं स्वकीयान् मन्महे।"

अहमितोऽप्यधिकं व्याघूर्णो। किमिदं 'शे' इति ?[1] नाहं किमप्यबुध्ये।

---

१. 'यह सब क्या गोलमाल है ?' इति वाक्याशयः। 'किमिदं चिदम्बर-रहस्यमि'ति यावत्।

स महानुभावोऽव्याहतं वक्तुमुपचक्रमे—"पश्यतु भगवन्, वयं तावद् हिन्दीभाषां, हिन्दीभाषायाः प्रचारं, देशं, देशस्य सेवां—सर्वमप्येतत् पाषण्डतां मन्यामहे। किञ्च यावत्कालं श्वसिमस्तावत्कालं नेमां पाषण्डतामनुमंस्यामहे। न वयं गान्धीमहाभागस्यैकमपि वचः श्रोष्यामः। अस्तु तर्हि, भवानेव दिशतु कस्माद्वयं देवनागराक्षरैः सार्द्धम् उर्दू लिप्यक्षराण्यपि शिक्षेमहि?"

इदानीं किञ्चिदहमबुध्ये। उर्दू लिपेरनिवार्यतामुद्दिश्य स गान्धीमहाभागाय भृशमकुप्यत्। परमेतत्तावदिदानीमपि नाहमबुध्ये—वस्तूनि सर्वाणि खल्विमानि मादृशस्य परदेशवासिनोऽसंस्तुतस्य च जनस्य पुरस्तात्किमर्थं व्याक्रियन्त इति। अतस्तद्वाक्योपरमसमकालमेव तमहमपृच्छम्—"अपि भवान् निर्देक्ष्यति तं पन्थानं यो हि श्रीरामपुरं किञ्च तत्रगतं 'लोकहितकारिणी'त्याख्यं निकायं प्रत्युपसर्पति?"

"बाढं भगवन्। निर्देक्ष्याम्यायातु।"

स बही राजमार्गोपकण्ठं यावदागत्य मां मदीयं गन्तव्यस्थानं निरदिशत्। तत्स्थानं ततो नातिदूरमासीत्।

अहमवोचम्—"वरम्। नमस्ते।"

"नमस्ते।" स तथा प्रत्युदतरद् यथा कस्या अपि महत्या विपत्तेर्लघुनोपायेनैव पिण्डमोक्षः सञ्जातो भवेत्तस्य।

भूयः खल्वहं बेंगलूरनगरस्य स्वच्छसुवीथ्रेषु, कुट्टिमितवज्रलेपोपलिप्तेषु राजमार्गेषु समचरम्। विद्युद्दीपानां स्तम्भेषु दृष्टिमबध्नाम्। नहि कोऽपि स्तम्भः खल्वायसः। सर्वेऽप्यनाविद्धैस्तुङ्गद्रुमस्कन्धैर्विनिर्मिताः।[1] परं नैतेन नगरसौन्दर्योपघातः सम-

१. अनाविद्धः=अकुटिलः। अभुग्नः। ऋजुरिति यावत्।

जायत ववापि ।

श्रीरामपुरं प्राप्नवम् । श्रीयुतश्रीधरमहाभागो—यं दिदृक्षुरहं तत्रायाम्—कटकं[1] गत आसीत् । शेषाः सर्वेऽपरिचिता आसन् ।

लोकहितकारिण्याः प्रवेशद्वारे खल्वेकश्छात्रोऽतिष्ठत् । श्रीधरमहाभागः कदा प्रत्यावर्त्स्यतीत्यहं तमपृच्छम् । नाहं किमपि वेद्मीत्यसावुदतरत् । एतेन भृशमिव खिन्नमनाः समजाये । अहमवोचम्—"शृणु, श्रीधरमहाभागं दिदृक्षुः पद्भ्यामेव चलित्वा समागच्छमत्राहं विश्वेश्वरपुरात् । अहमस्मि नाम्ना विकासः पण्डितोपाह्वयः । कटकात्प्रत्यायाते तस्मिन्नहमद्य रात्रावत्रायास्यामीति निवेदनीयं त्वया । सम्प्रति विश्वेश्वरपुरं गच्छाम्यहम् । वर्षद्वयात्पूर्वं षण्मुखपत्तने[2] तेन सह मम प्रथमः संस्तवः समजायतेत्येतदपि तस्मै निवेदनीयम् ।"

अहमेतत्सर्वं तेन च्छात्रेण सह स्खलितभूयिष्ठायां स्वीयायां कन्नडभाषायामालपम् ।

"प्रत्यायाते श्रीधरमहाभागे भवद्विषये तमवश्यं सूचयिष्यामी"त्यसौ छात्रो मामगदत् ।

भूयः खल्वपि बेंगलूरनगरस्य राजमार्गा अहं च ।

परिधानसेवके चतुराणिका तथैव सुरक्षिताऽविद्यत । एतावन्तं कालं नाहं किमप्यभ्यवहरम् । प्रातर्वेङ्कटरामश्छात्राणां संयुक्तमहानसे[3] तेन सह भोजनादिकं निर्वर्त्यैव मया भ्रमणार्थं बहिर्गन्तव्यमिति भूयो भूयो मामन्वरुणत् । परं मूढचेतसा मया

---

१. कटकः='कैन्टोनमेंट' इत्यर्थः ।

२. षण्मुखपत्तनम्='मद्रास' इत्याख्यं महानगरम् ।

३. महानसः='Mess' इत्यांग्लभाषायाम् ।

अवधीरितस्तदीयोऽनुरोधातिशयः । आश्रमप्रधानमहाभागं द्रष्टुं प्रयाते मयि ध्रुवमेवासौ सबहुमानं बहुमूल्यं किमपि मां प्रभूतं भोजयिष्यतीत्ययमप्यासीदवकल्पस्तदवधीरणाकारणम् । परं वेङ्कटरामस्याग्रहमनादृत्य न मया साधु समाचरितमिति सम्प्रति प्रत्यैयत । ध्रुवं परित्यज्याऽध्रुवं निषेवमाणानामविमृश्य-कारिणां बालिशानां सर्वत्रेदमेव प्रतिपद्यते ।

भवतु । प्रातर्नगरपर्यटनकाम्यया बहिर्निष्क्रान्तस्य मे नाऽन्वभूयत खल्वशनायादिकं किमपि । पर्यटनवेलायां च समय-स्याप्यवच्छेदो व्यस्मिर्यत । अथ यदा प्रत्यावर्तितुमुपाक्रमे, तदा पादौ पर्यश्राम्येताम् । अशनायाऽपि शनकैरन्वभूयत । परं किमशनीयं कथं चाशनीयम् ?

यदाहं बाष्पगन्त्रीप्रस्थानकं पृष्ठतः कृत्वा पुरतः प्रासर्पम्, तदा जाठराग्निरप्यदीव्यत् । समक्षमेवैकोऽशनालयोऽलक्ष्यत । तत्समीपगमनसमकालमेव तदन्तरजिगमिषम् । परं भूयः खल्वालोचयम् कथमेभिश्चतुर्भिरेवाणकगणैः कार्यं सेत्स्यतीति । एतावता ह्यग्रत एव प्रासर्पम् । अग्रे भूयः खल्वेकोऽवालोक्यत विशालोऽशनालयः । तस्य सङ्केतफलकः कियानिवाभवन्नेत्रा-ऽऽकर्षकः ! भूयोप्युद्गाढतयाऽन्तरजिगमिषम् । परं भूयोऽप्यात्मानं न्यवारयम् तदन्तर्गमनात् । अनारतं पञ्चानामशनालयानां पुरस्ताद् व्रजतो ममेयमेवावस्था समजायत । सर्वत्राप्यहमात्मानं न्यरुन्धि । परं समायाते षष्ठेऽशनालये नाहमात्मानं रोद्धुमशक्न-वम् । किञ्च विनाप्यालोचनातिशयमहमन्तः प्राविशम् । तत्रैकस्यां रिक्तायामुपवेशन्यामुपाविशम् । उपवेशनानन्तरं मस्तिष्कोदर-

योर्मध्ये व्यावयोधी[1] प्रावर्तत । उदरमभरणत्—'किञ्चित्तु भोक्तव्यमेवे'ति । परं मस्तिष्कमभणत्—'चत्वारस्त्वाणकाः; नगरं चापि बृहद्; अवसितेष्वेतेषु कः खल्वग्रे निर्वाहोपायः ? कदा किम्प्रसज्येतेति को वेद ? तस्मादेतेषां चतुर्णामाणकानां तथैव सुरक्षणं क्षेमतरमि'ति ।

अशनालयवर्ती वण्डचेटको[2] मामुपेत्यापृच्छत्—"किमिष्यते ?"

नाहमितोऽपि किञ्चिन्निरचिन्वि किं गृह्णीयामिति । तस्मात् कञ्चित्कालं यावच्चिन्तयँस्तथैव निःशब्दमासि ।

स न्यगदत्—"त्वरितमादिश्यताम् । समयो नास्ति वृथाऽतिवाहयितुं मम समीपे ।"

एतच्छ्रुत्वेतोऽप्यधिकं विहस्तः समभवम् । कथञ्चिदात्मानं पर्यवस्थापयन्नहमभाषे—"प्रत्यग्रसाधितं किमस्त्यत्र ?"

"अत्र सर्वमपि प्रत्यग्रसाधितमेव तिष्ठति ।" इतोऽप्यवज्ञोपेतेन वचसाऽभ्यदधात् स ।

अहं चिन्तयन्नेवासि । नैव काऽपि स्फुरणा मम मस्तिष्कपथमस्पृशत् ।

"बाढम्, भगवन् । निर्दिश्यतां किमानीयेतेति । किञ्चिज्जिघृक्षितं स्यात्तर्हि स्थीयताम् । नो चेदन्येषां कृते स्थानं सावकाशीक्रियताम् ।"

तस्य वण्डचेटकस्येमानि दुर्मर्षणीयानि वचांस्याकर्ण्य सर्वथा

१. व्यावयोधी=परस्परं युद्धम् ।
२. वण्डचेटकः='Waiter' इत्यांग्लभाषायाम् ।

सप्रतिघः[1] समजाये । अहमुपवेशनीमुत्सृज्योदतिष्ठम् । सामर्ष-मवदम् चापि—"अन्येऽपि परोविंशाः[2] सन्त्यशनालयाः । अयमेव केवलं भवदीयो नास्त्यशनालयः ।"

क्रोधखदिराङ्गारैर्दन्दह्यमानसर्वदेहो निरगच्छमहं तस्माद् अशनालयात् । अस्यामेव चावस्थायामशनायादिकं सर्वमपि विस्मृत्य सरलं कुट्टिमपण्यवीथिकां यावत्समायाम् । मार्गे ह्यतिविंशा अशनालयाः, अशनालयानां सङ्केतफलकाश्चावालोक्यन्त । अशनालयगतवण्डचेटकानामुच्चैराक्रोशश्च समश्रूयत । परं नाहमात्मानं मध्येमार्गं क्वापि न्यरुन्धि । सरलमग्रत एव प्रासर्पम् । कुट्टिमपण्यवीथिकायाः सम्मुखमेवैकस्मिन् स्थाने भृष्टबुध्नशिम्बा-विक्रयिकः[3] स्वकीयं कण्डोलं प्रसार्योपाविशत् । तत्र गत्वाऽहम-स्तम्भे । आलोचयम् एकस्य कार्षापणस्यैव काश्चित् भृष्टबुध्न-शिम्बाः कस्मान्न क्रीणीयेति ।

पृथक्पृथक् चत्वार आणका नावर्तन्त परिधानसेवके । तेषां समाहारभूता चतुराणिकैका खल्ववर्तत । भूयः खल्वालोचयम् सा यथा वर्तते तथैवास्ताम्; तस्या निर्ग्रन्थनं[4] नैव क्षेमाय भवि-ष्यति; निर्ग्रन्थितायां तस्यां कार्षापणक्रमेण चत्वारोऽप्याणका अचिरादेव क्षयमेष्यन्ति; यावदेव ह्यनिर्ग्रन्थिता तिष्ठति तावदेव सुरक्षिता सा स्थास्यति; इतरथा निःशेषतां यास्यति सर्वमपि द्रव्यमिति । तथाप्यालोचयम् इदानीं नैव कार्यं सेत्स्यति

---

१. सप्रतिघः=क्रुद्धः ।

२. परोविंशाः='बीसियों' इति भाषायाम् ।

३. बुध्नशिम्बा='मूंगफली' इति भाषायाम् ।

४. निर्ग्रन्थनम्='तुड़वाना' इति भाषायाम् ।

भृष्टबुध्नशिम्बाक्रयमन्तरेणेति । यावता जिह्वाऽप्यगृध्यद् उदरं चाप्यन्वनयत मां तदानीम् ।

अहं स्वपरिधानसेवकान्निष्कास्य तां चतुराणिकां बुध्न-शिम्बाविक्रयिकहस्ते समक्रामयम् ।

"आणकचतुष्टयस्योन्मानयेयम् किम् ?" सोऽपृच्छत् ।

अहमुद्विज्य प्रावोचम्—"मा मैवम् । न खल्वाणकचतुष्टयस्य ।"

"कतिकास्तर्ह्युन्मानयेयम् ?"

"उन्मानय खल्वेकस्य···कार्षापणस्य ।" सातिसङ्कोचं वाक्य-गतं पूर्वांशमुच्चैरुत्तरांशं च नीचैः प्रोच्चार्य निरदिशम् ।

स बुध्नशिम्बा उदमानयत् । ताभिः सार्धं चाणकत्रयं मम हस्ते प्रत्यार्पयत् ।

अहमवोचम्—"अयि भद्रमुख, शेषास्त्रयः कार्षापणाः क्व ?"

"शेषास्त्रयः किमर्थाः कार्षापणाः ?"

"इमा बुध्नशिम्बास्त्वमेकस्यैव कार्षापणस्योदमानयो न वा ?" अहं व्यग्रभावेनापृच्छम् ।

"इमा एकस्याणकस्योदमानयम् श्रीमन्, एकस्याणकस्य ।" ईषदुद्दीप्य प्रत्यवोचत् स ।

ता बुध्नशिम्बाः प्रत्यर्पयन्नहं तमवोचम्—"तावदवस्थ्ये गृहाणेमाः स्वकीया बुध्नशिम्बाः किञ्चैकस्यैव कार्षापणस्योन्मा-नय पुनरपि ।"

"एकस्य कार्षापणस्य नैव क्वाप्युन्मान्यन्ते बुध्नशिम्बाः ।"

"गृहाण तर्हि तदाणकत्रयं स्वकीयम् । प्रत्यर्पय तावन्मदीयां चतुराणिकाम् । नाहं कामये त्वदीया बुध्नशिम्बाः ।" अहमपि

किञ्चित्परिक्लिश्य प्रावोचम् ।

स मदीयां चतुराणिकां प्रत्यार्पयत् । अहमग्रतः प्रासर्पम् । समतुष्यम् चापि तथैवाऽन्ययितां स्थितां तां चतुराणिकां दृष्ट्वा मनस्येव ।

अनतिदूरे लोकजलप्रणालक एकोऽवालोक्यत । इदानीं मध्याह्नोत्तरस्य सार्धैकवादनस्य समय आसीज्जातु । ललाट-न्तपोऽतपदादित्यः । प्रातः प्रभृत्येतावन्तं कालं नाहं क्वाप्युपा-विशम् । अशनाया प्रादीव्यत् । किञ्च भृशं गात्रदौर्बल्यमप्यन्व-भूयत । तस्माज्जलप्रणालकं वीक्ष्य द्रागेव तमुपासर्पम् ।

जलप्रणालकः···पानीयम्···बेंगलूरनगरम्···

हठादेव ह्यस्तनी प्रभातवेलाऽस्म्रियत । माधुर्यस्यैकाधिष्ठान-भूता सा मूर्तिर्भूयोऽपि मम चक्षुषोः पुरस्तादचकासत् ।

जलप्रणालकः···पानीयम्···कु-सु-म-ल-क्ष्मीः···

पानीयं गृह्णतो मम न वेद्मि कस्मादेष प्रश्नो मां वृश्चिक-दंशिकया दष्टुमारेभे—'कुसुमलक्ष्म्याः खल्वेतस्मिन् बेंगलूरनगरे विकास, तवायं दशापरिणामः ?'

अहमुदरपूरं बेंगलूरनगरगतलोकजलप्रणालकस्य तन्मधुरं पानीयमपिबम् । अनशितोदरेण नैव पानीयं पातव्यमित्यस्मदीयो मातृजनोपज्ञो गृहनियमः । परं कस्तं नियमं परिपालयेदत्र ? अहं प्रभूतं पानीयं स्वकीय उदर औम्भम् । एतेन हृदयं किमपि शैतल्यमिवान्वभवत् ।

परं पानीयेनोम्भितमप्युदरं शंक्ष्यति किमन्नग्रहणाभिलाषं परित्यक्तुम् ?

## चतुर्थः समुच्छ्वासः ।

उदरे बुभुक्षा; पादयोः क्लमः; गात्रेषु शैथिल्यम्; मनसि च नैराश्यम् । एतादृशी यस्य भवेद् दशा स मध्याह्नवेलायां चिलचिलायमाने प्रखरसूर्यातपे कियत्कालं पर्यटिष्यति ? मार्गे घनच्छायावतां द्रुमाणां नासीदभावः । उपवेष्टुमुचितानि स्थानान्यपि बहून्यासन् । तथापि नारोचत मह्यं क्वाप्युपवेशनम् । अटामि चेत्पादौ पीड्येते; उपविशामि चेन्मन उद्वेगं भजते । कथञ्चिदपि रुदन्वा रुष्यन्वाऽहं विश्वेश्वरपुरस्थितं तमेव नगरयानप्रस्थानकमुपागच्छम्, यत्र ह्यः कुसुमलक्ष्मीर्नगरयानमारुह्य निर्गताऽऽसीत् । तदानीं मध्याह्नोत्तरं सार्धद्विवादनं समजायत जातु ।

ह्यो यत्रावामतिष्ठाव सर्वथा तत्रैव गत्वाऽहमद्यातिष्ठम् । अस्मिन् समये न खलु कुसुमलक्ष्मीः किन्तर्हि तया परिवेषिता ह्यस्तना रुचिभूयिष्ठाः पाकप्रकारा एव भूयो भूयो मम स्मृतिपथं समायान्ति स्म । इदं साहजिकमासीत् । यद्यहं ब्रूयाम् मनोजगतः सर्वा अपि वृत्तयो मदीयास्तस्यामेवानुभूत्यामेकताना भूत्वा मां बाह्यजगतः सर्वथा पराङ्मुखं किञ्च व्यपगतचेतनमिव व्यदधतेति, तर्हि नात्र भविष्यति काप्यत्युक्तिः । अहमात्मनिमग्न इव कामप्यनिर्वचनीयां स्वप्नावस्थामनुभवँस्तत्रैव नगरयानप्रस्थानकेऽतिष्ठम् ।

अत्रान्तरे समागच्छदेकं नगरयानम् । अन्तरेण मां नान्यः कश्चन तत्रावर्तत तस्मिन्त्समये । जात्वहं नगरयानागमनमेवोदीक्षमाणस्तत्राऽस्मीति मत्वा नगरयानचालकस्तत्र नगरयानमस्तम्भयत् । तदागमनसमकालमेवाहं प्राबुध्ये । कुसुमलक्ष्मीरनेनैव तावत्प्रायान्नगरयानेन । नैव किम् ? अहमपि चेदेतदारोहेयम् सम्प्राप्स्यामि किन्तर्हि कुसुमलक्ष्म्या आवसथम् ? न वेद्मि कस्मात्तस्मिन्नगरयाने कुसुमलक्ष्मीमन्वेष्टुमारेभाते मम नेत्रे । तत्र स्थिताः स्त्रीमूर्तीः सप्रणिधानमहमारभे द्रष्टुम् ।

"कृपया सत्वरमारुह्यताम् ।" यानप्रबन्धको मां समबोधयत् ।

"न खल्वहमारोढुकामः ।" किञ्चिदुद्भ्रान्तः सन् प्रावोचमहम् ।

"आः, अहं व्यचिन्तयम् नगरयानार्थी भवानत्र तिष्ठतीति ।" यानप्रबन्धक एतदुक्त्वा वरत्रामाकृष्य सङ्केतनघण्टिकां टणत्कृतवान् उक्तवाँश्चापि—"सर्वमनवद्यम्" इति ।

मम पश्यत एव नगरयानं सभरात्कारं निरगात् ।

इतोऽपि मनो मेऽभ्यलष्यद् द्रुतं प्रद्रुत्यासादयेयम् तन्नगरयानमिति । परं किमकरिष्यम् आसाद्य ? आरूढे मयि यदि यानप्रबन्धको मामुपेत्याप्रक्ष्यत् 'कुत्र यातव्यमि'ति, तत्किमहं प्रत्यभाषिष्ये ? अभाषिष्ये किम् 'कुसुमलक्ष्म्या आवसथमि'ति ? नगरयानस्थाः सर्वेऽपि गृहीतविनया जना मां यथाजातममंस्यन्त । किञ्च यानप्रबन्धकोऽपि समुन्नद्धः सन् मामवागणयिष्यत् । नाहं कुसुमलक्ष्म्या आवासप्रवृत्तिमपि सम्यगजानाम् । सा 'मल्लेश्वर' इति नाम समशब्दयत् । परं मल्लेश्वरस्तु बहुविस्तीर्णो नगर-

भागः। क्वाऽवातरिष्यम् कं पुनस्तस्या निवासस्थानमप्रक्ष्यम् ?

परमार्थतस्तावत् तस्या आवसथो नासीदेव जिगमिषितो मम। अन्यथा ह्य एव कस्मान्नागमिष्यम् ? अद्यापि प्रातस्तस्मिन्नेव नगरविभागे पर्यटम्। कुतो न तस्या आवसथममार्गयिष्यम् ?

कयापि सानुक्रोशया भद्रस्त्रियाऽपरिचितयाऽपि सकृदातिथ्येनाहमुपाचर्ये—नास्ति किमेष महतो भागधेयस्य विषयः ? अधिगतेऽपि तस्मिन् सुमहति भागधेये कस्माज्जनो मुहुर्मुहुस्तदधिगमे सञ्जातलालसो भवेत् ? एतादृशो लालसातिशयः कस्य खलु गृहीतविनयस्य कृतबुद्धेश्च जनस्य प्रीतिमुत्पादयिष्यति ?

एवं सम्प्रधार्य वेदधर्मप्रसाराश्रमं प्रत्यहं प्रातिष्ठे। मम तत्र प्रापणात्पूर्वमेव कृत्स्नमपि तद् भवनं निर्मनुष्यं समजायत। छात्राः स्वान् स्वान् विद्यालयान्महाविद्यालयान्वाऽगच्छन्। वेङ्कटरामस्यकपाटिकायां मम वस्तुजातं सुरक्षितमासीदेव। कुट्टिमे कटः समास्तीर्ण आसीत्। अहं सर्वस्यापि दिवसस्य श्रान्तः, अशनायितः, पिपासितश्च। अभ्याश एव विद्यमानादलिञ्जरात्तद्गतं सुशीतलं पानीयं तदुपरि प्रच्छादनत्वेन न्यस्तेन काचकंसेनादाय भूयोऽप्येकवारमुदरपूरं सगटगटास्वनमपिबम्।

पनीयं पीत्वा तस्मिन्कटे स्वात्मानं व्यस्तृणाम्। तत्कालमेव प्रामील्येताम् मदीये चक्षुषी।

× ×

उपसूर्यास्तमनवेलं जागरा प्रत्यपद्यत। तमसः पूर्वच्छाया सर्वत्र व्याप्नोत्। न खल्वागच्छदितोऽपि वेङ्कटरामः। परमन्ये बहवश्छात्रा आवेष्टितलुङ्गिका, धृतान्तरङ्गिका, वितूस्तित-

मूर्धजाश्च तस्ततो गतागतमकुर्वन् । वेङ्कटरामस्य प्रतिवेशी छात्रः प्रदर्शितसौभद्रो मामजागरयत् । अक्षिणी परिमृजन्नहं कञ्चित्कालं तत्रैवोपाविशम् । स च्छात्रो मामुपादिशत्—"उत्थीयताम् । प्रत्यासन्नः खलु सायं समयः । पाणिपादं मुखादिकं च प्रक्षाल्यताम् ।"

"उपकृतोऽस्मि ।" इति व्याहरन्नुदतिष्ठम् । निर्वृत्तसायंसमयाचारः प्रत्यागत्य बहिर्निर्गमनार्थी स्वकीयं वस्तुजातमुदतोलयम् । स एव च्छात्रो मां तथाविधं क्वापि गन्तुमुद्यतं दृष्ट्वा सपद्येवावदत्—"अप्येतदाश्रमं परित्यज्य क्वाप्यन्यत्र गम्यते भवता ?"

"ओम् ।" अहमभाषे ।

"क्व खलु ? तावच्छीघ्रम् ?

"अहं श्रीरामपुरं गच्छामि । तत्र ममैकं मित्रं निवसति । तत्रैव कानिचिदहानि वास्तव्यं करिष्यामि । अथ वेङ्कटरामं प्रति मम धन्यवादा विज्ञापनीयाः ।" इत्युक्त्वा नमस्कृत्य तत्रत्यान् सर्वान् परिचितांश्छात्रान् अहमाश्रमाद् बहिरागच्छम् । विश्वेश्वरपुरस्थे नगरयानप्रस्थानके श्रीरामपुरगामिनगरयानमासाद्य चतुराणिकयैव निष्प्रत्यूहं स्वाभिमतं स्थानं प्राप्नवम् ।

विद्युद्दीपा अद्योतिषत । अवतमसवशादितोऽपि तेषां प्रकाशे नासीदपेक्षितप्रमाणा जाज्वल्यता ।

श्रीरामपुरे लोकहितकारिण्यां गत्वा श्रीधरमहाभागं तत्रैव विद्यमानमपश्यम् । प्रथमन्तु नासौ मां पर्यचिनोत् । परं विज्ञापिते सति षण्मुखपत्तनगते नौ सन्दर्शने तूर्णमेव मां प्रत्यभ्यजानात् ।

अनारभ्य दीर्घालापानैतस्तत्यान् स च्छात्रमेकमाहूया-ऽपृच्छत्—"अप्यवशिष्यन्ते रसवत्यामाहारवस्तूनि ?"

"प्रकाममवशिष्यन्ते ।" असावभाषत।

श्रीधरमहाभागो मामुपादिशत्—"अथ भवान् भोजनं करोतु ।"

कृत्स्नस्यापि दिवसस्य निराहारत्वस्याऽनन्तरमिदानीमाहार-लाभं दृष्ट्वा हर्षावेगेनाऽनरीनृत्यत मे हृदयम् । मनस्येव परमेश्वरचरणयोः प्रकीर्णो धन्यवादपुष्पाणामञ्जलिः ।

स च्छात्रो मां रसवत्यभ्यन्तरेऽनयत् । पाणिपादम् प्राक्षा-लयम् । आसनमास्तीर्यत । तत्रोपविष्टे मयि च्छात्रो भोजनं पर्यवेषयत् ।

किमासीत्तत्र ?

भक्तम्, सूपः, एकतश्च ब्रह्मचारिजनोपभोग्या लेह्या । परं कीदृशो निरुपम आसीत्तदास्वादः ? अशनाया जातु जिह्वारुचेः सर्वोत्तमं परिष्कारसाधनम् । तस्मादेव कारणादिदं 'विदुर-गृहान्नं' राजप्रासादगतेभ्यः पञ्चपक्वान्नेभ्योऽप्यधिकतरं जिह्वा-रसमुदपादयत् ।

अन्ये जनाः किञ्चित्कालपूर्वमेवाभुञ्जत । इतोऽपि जन-द्वयोपभोगाधिकं भक्तादिकमवाशिष्यत ।

स च्छात्रो नितरां विनम्रः सन् भोजनं पर्यवेषयत् । अनेक-कृत्वः प्रावोचदपि—"सावकाशं भोजनं करोतु भवान् । इतोऽपि प्रचुरं भक्तादिकं तिष्ठति ।"

सुचिरमशनायाप्रपीडितः सन् कश्चिदपि यदा भोजनार्थ-

मुपविशति साहजिकमेव तदा तस्य मनसि सङ्कसुकता पदं निदधाति। सङ्कसुकश्च कथं क्षमेत शान्त्या स्थिरतया वा कवलं ग्रहीतुम्? असावुद्विग्न इवोद्भ्रान्त इव चाचरति। तस्मात् पूरितेऽपि जठरगह्वरे नासौ कवलरुचिं जानाति। अदभ्रायामुद्विग्नतायां कोह्यवदध्यात्कवलरुचिम्? कयाचिदपि मम चेष्टया मदीयामिमामुद्विग्नतां विज्ञायैव जातु स मां निश्चिन्तेन मनसाऽऽहारग्रहणं कर्तुं क्रियासमभिहारेणाभ्यदधात्।

भवतु। अथ भोजनस्यान्तिमः क्रमः समुपस्थितः। अस्मिन्क्रमे भक्तेन सह च्छच्छिकाऽपि वण्ड्यते। छच्छिकाग्रहणसमये मात्रं सर्वा मे सङ्कसुकता व्यपगता। तस्मात्कारणाद् निष्प्रत्यूहमहं त्रिचतुरशरावामितां छच्छिकामाचामम्।

पर्यवसिता भोजनक्रिया। श्रीधरमहाभागमुपागच्छमहम्।

स शिविरखट्वायां[1] मम शयनं प्राबध्नात्।

स प्रावोचत्—"अद्य भृशं परिश्रान्तो भवान्। तस्माच्छेतामिदानीम्। श्वः सँल्लपिष्यावः।"

पाणिपादं सम्प्रसार्य श्लथयित्वा च कृत्स्नमपि गात्रबन्धं यदा तस्यां शिविरखट्वायां न्यपतम्, तदा निर्वृतेः परां कोटिमन्वभवम्। एतेभ्यो द्वित्रेभ्यो दिवसेभ्योऽनुक्षणं परिवर्तमानं स्वजीवितगतं व्यतिकरजातं पर्यालोचयितुमकामयत मे मनस्तदानीम्। परमादावेव परिक्लान्तं स्वकीयं मस्तिष्कं विचाराणां दीर्घया शृङ्खलया नोचितमितोऽप्युत्क्लेशयितुमिति मत्वा परित्यक्तसर्वविधपर्यालोचनक्रियः शिविरखट्वासमास्तीर्णस्य दुग्धफेनोज्ज्वलधवल-

---

१. शिविरखट्वा='कैंपकॉट' इत्यांग्लभाषयाम्।

प्रच्छादनांशुकसमन्वितसुमृदुलतूलशयनस्योत्सङ्गे स्नेहमय्या अम्बायाः क्रोडे शिशुरिवाहं स्वात्मानं सन्निपात्य समविशम्।

संख्यामतीत्य वर्तमानैर्दुःखैः, यातनाभिः, व्यथाभिश्च निर्मथितस्य कृत्स्नस्यापि प्राणिजातस्योपरि कियानिवास्त्यनुक्रोशो भगवत्या निद्राम्बिकायाः! कश्चनापि प्रभविष्यति किं तस्या महतो महत एतस्माद्दृणौघादात्मानं मोचयितुम् कालत्रयेणापि?

प्रातरुत्थाय व्यजानाम् स्वकीयमेकं प्रसेवं विश्वेश्वरपुर एव विस्मृत्य समागतोऽस्मीति। तस्मिन्नविद्यत जीवितसर्वस्वं मदीयम्। केचित्संग्रहा मम बहुमूल्यानां कवितानां हस्तलिखितरूपेण तस्मिन्नेवासन्। तमेव चाहं विस्मृत्यागच्छम्। हन्त, पुनरपि पद्भ्यामेव विश्वेश्वरपुरं यावद् गन्तव्यं भविष्यति! किमिदानीं प्रतिपद्येय? कियत्कालमनुवर्तितव्यः स एव दुरितसहस्रसङ्कुलो धूर्तः पन्थाः?

श्रीधरमहाभागस्यासीन्नितरां साधुस्वभावः। स मम चिन्ताहेतुमपृच्छत्। अहमपि व्यपगतसङ्कोचः कृत्स्नमपि मदीयं स्थितिजातं तस्मै न्यवेदयम्—'सर्वथा निःसाधनोऽस्मी'ति।

"नात्र सङ्कोचः कार्यः।" इत्युक्त्वासौ पञ्चरूप्यकाणामेकां कार्गलमुद्रां[1] मह्यमददात्। अवदच्चापि—"एतावद् द्रव्यं प्रयच्छामि। इतरन्मार्गव्ययादिकं परस्तात् प्रभन्त्स्यामि। नहि किमपि कृच्छ्रमनुभविष्यति भवानस्मदीये बेंगलूरनगरे।"

यो हि जनः कफल्लकः सन् विवशावस्थायां पर्यटाट्यत,

१. कार्गलमुद्रा='Currency note' इत्यर्थः।

तस्य कृते पञ्चरूप्यकाणामियं कार्गलमुद्राऽपि प्रभूतं धनं भवति । स्नानादिकं प्रातराहारादिकं च निर्वर्त्य विश्वेश्वरपुरगामिनगरयानमासादयितुं यदा बहिर्निरगच्छम्, तदा हर्षातिरेकात् प्रसन्नशरज्ज्योत्स्नायां निशि चिर्भटीक्षेत्रे स्थितस्य द्वीपिचर्मपरिच्छन्नस्य यथेच्छं भुक्तवतो रासभस्येव ममापि समजायत दशापरिणामः। अहमप्यधिगतसकलसङ्गीतशास्त्रसार इव गर्दभश्चीत्कर्तुमारेभे । नापि मन्द्रसप्तकेन नापि च मध्यसप्तकेन किन्तर्हि तारसप्तकेन । सत्कुलोत्पन्नोऽस्मि, सुगृहीतविद्योऽस्मि, सर्वविनयगुणसम्पन्नोऽस्मि, सुसंस्कृतजीवितवर्तनोऽस्मि, न मया पृथग्जनेनेव प्रथिते वर्त्मनि खल्वनया रीत्याऽऽक्रोशो विधातव्य इत्येवमादि सर्वमपि सर्वथा व्यस्मरम् । एष कृत्स्नोऽपि परिधानसेवकगतायाः पञ्चरूप्यककार्गलमुद्राया एव परिणामः ! किमहमेवंविधे व्यतिकरे परवानकरिष्यम् ?

जना व्यजिज्ञपन् इतोऽपि नगरयानागमने प्रभूतः समयोऽस्तीति । समीपमेवैका केशसंस्करणशालाऽदृश्यत । केशा अत्यधिकमविनीताः सन्ति, किञ्चिद्विनयाधानं तेषां कारयितव्यमिति धिया तस्यां केशसंस्करणशालायामहं प्राविशम् । पुरुषारोह आदर्शे दृष्टिपूरं स्वात्मानमेकदा व्यलोकयम् । यः खलु क्षुत्क्षामकण्ठोऽपि ह्यो नाक्षमत प्रवेष्टुमशनालये, स एवाद्य सविशेषाङ्गसौकुमार्याविष्करणपुरस्सरं केशसंस्करणशालायां प्रविशति । बाढमार्यमिश्राः, परिधानसेवकगतः कार्षापणनिचय एवोपदिशति सर्वमपीदमङ्गसौकुमार्याविष्करणमर्कटपाण्डित्यम् ! किञ्च विलोकयत तावदेतन्मानवीयं जीवितम् । कथमेकस्यामेव रात्रौ तस्याकाशपातालस्पर्शी जायते दशापरिणामः ?

यदा विश्वेश्वरपुरं गत्वा स्वकीयं प्रमेवं सुरक्षितमपश्यम्, तदा क्वापि समुच्छ्वसितं नाम मदीयैः प्राणैः। तमादाय नगरयानेन श्रीरामपुरं यातो मम शरीरं मनश्च—उभयमपि प्रसन्नं समजायत। इदानीमहं सुप्रसन्नेन मनसा प्रीताभ्यां च नेत्राभ्यां बेंगलूरनगरस्याभिख्यां मनोहृत्य वीक्षितुमशक्नवम्। निखिलमपि बेंगलूरनगरमिदानीं स्मयमानमिव प्रत्यैयत मदर्थम्। बेंगलूरस्योपरि नभस्तः स्यन्दमानानां नानावर्णानां सुरभिगन्धीनां पुष्पाणां वृष्टिर्भवतीवेति समजायत मे प्रत्ययः। तान्येव पुष्पाणि बेंगलूरनगरस्योद्यानवनानामुपरि, ह्युभयतो राजमार्गं विद्यमानानां वृक्षवेणीनामुपरि च विकीर्णानीव प्रत्यैयन्त। नगरयानाभ्यन्तरे मम समीपम् अग्रतः, पृष्ठतो, वामतो, दक्षिणतश्चासीनानां कर्णाटपुरन्ध्रीणां केशकलापेषु ग्रथिताः पुष्पापीडाः खल्वपि मदीयामिमामेव दिव्यां कल्पनां प्रत्यक्षतो निदर्शयन्ति स्म।

इदमेव नगरं ह्यः कस्यापि करालदंष्ट्रस्य दैत्यस्याकारं धारयित्वा मामुदरसात्कर्तुं व्यवसितमिव प्रत्यैयत। किञ्चाद्य तस्यैवेदं सौम्यसुकुमारं, ललितरमणीयं रूपम्! परिधानसेवकगतैः पञ्चभिरव रूप्यकैः बेंगलूरस्यौपाधिके गुणाभासे मदर्थं कीदृशं सुमहत्परिवर्तनमुत्पादितमासीद् विलोक्यताम्!

श्रीरामपुरे तत्रत्यैश्छात्रैः सह पंक्तौ स्थित्वा निर्वर्तितमध्याह्नपूर्वकालिकभोजनाचारयोः श्रीधरमहाभागाणां कक्षे चिररात्रायावयोः प्रावर्तत वार्तालापः। मदीयं काव्यादिकं स समनोयोगमश्रृणोत्। तच्छ्रुत्वा स मां कमप्यसामान्यप्रतिभं जनममनुतेति वक्तव्यं भवति। अवदच्चापि—"भवान् कामयेत चेद् भवतो निवासादिकं कार्योद्योगादिकं चात्रैव प्रबध्नीयाम्।

परं नाहमागच्छमत्र कार्योद्योगादिकं मार्गयितुम् । एतन्नगर-दिदृक्षैव केवलं मामत्र समानयत् । ततोऽधिकं नासीत्किमप्याकाङ्क्षितान्तरं मदीयं सम्प्रति ।

× ×

मनुजस्य जीवितं खल्वपि चित्रविचित्ररूपः कलकलनिनादिन्याः सरितो महाप्रवाह इवोच्चावचसहस्रसङ्कुलं संसारपथमनुवर्तते । सुनिश्चितः खलु प्रवाहक्रमः । प्रकर्षश्चापकर्षश्च, कीर्तिश्चापकीर्तिश्च, साफल्यं च वैफल्यं च, सौकर्यं च परिक्लेशश्च—सर्वमपि खल्विदं पूर्वनिर्धारितेन व्यवस्थाक्रमेण सर्वेषां प्रतिपद्यते । नाहं तं पश्यामि जनं योह्यवतीर्णः संसारवर्त्मनि यश्च सर्वथा मुक्तः संसारगतेभ्यः खल्वेतेभ्योऽवस्थान्तरेभ्यः ।

ममापि बेंगलूरनगरागमनोत्तरा सर्वा अपि विपत्तयोऽपागच्छन् । इदानीं सर्वविधं सौविध्यमासीत् । परमेतदपि सौविध्यं कियत्कालं स्थाता ? रथस्य चक्रनेमयस्तु स्वेन क्रमेणाऽन्यां चाऽन्यां च दशां गन्तार एव !

एकदा प्रत्यूषे सर्वेऽप्याश्रमस्थाश्छात्राः सन्ध्यावन्दनादिकं कर्तुं पंक्तिक्रमेणोपाविशन् । अहमपि तत्रैव श्रीधरमहाभागस्यैकस्मिन्पार्श्वे उपाविशम् । अवसिते सन्ध्याचारे श्रीधरमहाभागश्छात्रान् सम्बोधयाञ्चक्रे—"छात्राः, कतमद्दिनमेतदद्येति जानीथ किं यूयम् ?"

सर्वे छात्राः सैकस्वरमूचुः—"जानीमो वयम् । अद्य पण्डितजवाहरलालनेहरूमहाभागानां जन्मदिनं वर्तते ।"

एतदाकर्ण्य श्रीधरमहाभागोऽब्रवीत्—"तदद्यास्माभिः सभा कार्या । यूयमत्रैवमेवोपविशत । दिष्ट्या श्रीमान् विकासपण्डित-

महाभागोऽस्माकं मध्ये विराजते। तदिदानीं तस्य श्रीमतां नेहरूमहाभागाणां विषये भाषणं भविष्यति।"

मदीयं नाम ?

इत्थं किमपि भावीति नाहं मनसाऽप्यकरवम्। नाहमेतदप्यवेदिषम् अद्य नेहरूमहाभागाणां जन्मदिनं विद्यत इति। मम तावत् स्वस्यापि जन्मदिनस्य बोधो विस्मियते; अन्येषां जनानां जन्मदिनादिकस्य तु कथैव का ? यद्येवाहमज्ञास्यम् अद्य मया भाषितव्यं भवतीति, मनस्येव तर्हि कानिचिद् वाक्यान्ययोजयिष्यम् नेहरूमहाभागस्य विषये। परमिदानीं तु तदर्थं समय एव नासीत्। हन्त भोः, किम्प्रतिपत्तव्यमिदानीम् !

छात्राः करतलध्वनिमकार्षुः। तेन करतलध्वनिनाऽहमितोऽपि हतप्रतिभः समभवम्। अहं मनस्येवालोचयम्—अद्यावधि यदपि भोजितं, पायितम्, आतिथ्येनोपचरितं च तस्य सर्वस्यापि प्रतिफलं कात्स्न्र्येन प्रत्यगृह्णात् श्रीधरमहाभागः खल्वेकेनैव कटाक्षवीक्षितेन। परमेष संव्यवहारो मदर्थंमतिमात्रं महार्घः प्रत्यपद्यत।

परमेश्वरो वेत्ति मद्विषये छात्रेषु किं किं प्रसृतमासीदिति। ते मामसाधारणप्रतिभोपेतम् असाधारणं च विद्वांसममन्वत। मदीया बकश्वेता खद्दरवस्त्रभूषा नेतृजनवस्त्रभूषासवर्णेवादृश्यत। तत्स्मात्कारणात् सर्वे छात्रा मां नेतारमेव कमप्यमन्वत। तेषामीदृशी धारणा साहजिक्येवासीत्। एभ्यो दिवसेभ्योऽहमस्मिन्निकाये निवसामि। श्रीधरमहाभागो मामेवमाद्रियते—एतत्सर्वं तेषां तां धारणामुपोद्बलयितुं पर्याप्तमासीत्। यद्यहं क्षुल्लकः कश्चनाऽभविष्यम्, पृथग्जनः कश्चनाभविष्यम्, अविद्वान् कश्चनाभविष्यम्

तर्ह्युतावद्भिरुपचारैः सहितं स मां किमर्थमत्र न्यवासयिष्यत् ?

छात्रैर्मद्विषये क्रियमाणान्येतान्यनुमानानि स्वमनस्यहमपि सम्यगजानाम् । इदमेव तावदासीन्मम तावतश्चित्तपरिक्लेशस्य कारणम् ! यावन्तं यादृशं च ते मामचिन्तयन्, तावान्वा तादृशो वाऽहमभविष्यम्, तदनुरूपं च भाषितुं प्राभविष्यम्, नूनं तर्हि प्रासत्स्यमेवाहम् ।

भवतु । अहं तावद् भणामि महती विपत्तिरेवासीदियम् मदर्थम् । अहं भाषितुमुदतिष्ठम् । समबोधयम् चापि—'भ्रातरः,' इति ।

अत्रान्तरे श्रीधरमहाभागोऽब्रवीत्—"श्रूयताम् । प्रथमं भवान् भाषताम् हिन्दीभाषायाम् । तत्पश्चादहं तस्य कन्नडीकरणं करिष्यामि ।"

अयमपरो गण्डस्योपरि स्फोटः । हिन्दयामेव केवलमहमभाषिष्ये तर्ह्यर्गलप्रलपितेनाऽपि मे कार्यमसेत्स्यत् । छात्राणां हिन्द्यास्तावन्मात्रं ज्ञानमेव नासीद् येन मद्भाषणगतानि स्खलितानि शक्नुयुस्ते निग्रहीतुम् । परमिदानीं तावदेकैकशो वाक्यान्युच्चारणीयानि । तेषां च कन्नडीकरणं भविष्यति । किम्भाषे किञ्च नैव भाषे सर्वमप्येतदेकैकशो वाक्यक्रमेण छात्रेभ्यः प्रतिपादयिष्यते । तादवस्थ्ये किमप्यविचारितं, विपर्यस्तम्, असम्बद्धं च भाषेय तेन च च्छात्राणां मनसि विद्यमानो मत्पाण्डित्यनिबन्धनः कृत्स्नोऽप्यादरोऽचिरांशुविलास इव विलयं यायात् तर्हि मम किम्प्रतिपत्स्यते ? वदनप्रदर्शनायाऽपि नावशिष्येत कश्चिदवकाशः । नूनं किमप्यापादमस्तकमहमकम्पे ।

अग्रिमं वाक्यं मुखादेवङ्कारं निरपतत्—'पण्डितजवाहर-

लालनेहरूमहाभागस्य नाम भवद्भिः श्रुतमेवास्ति । अस्माकं देशस्यासौ महान् लोकनायकः खल्वेक इत्येतदपि नास्त्यविदितं भवताम् ।'

श्रीधरमहाभागो वाक्यस्य खल्वस्य कन्नडीकरणं कर्तुमुपाक्रमत । चिन्तनाय किञ्चिदवकाशः प्राप्यत । परं कियानिव ? एकस्य वाऽध्यर्द्धस्य वा निमेषस्यैव । तथापि न किञ्चित्स्फुरितम् । अथ किमिदानीं करवै ? अवसितं श्रीधरमहाभागस्य कन्नडीकरणम् । मया खल्विदानीमग्रे वक्तव्यम् । अहं सममुह्यम् । मस्तिष्कपटले समुद्गाढं तम आसीत्प्रसृतम् । तथापि मोहमापन्न इव स्वमुखमहमुदघाटयम् । निरपतच्चापि तस्माद्वाक्यमेतत्—'अद्य हि परतन्त्रः खल्वस्मदीयो देशः । तत्परतन्त्रतापाशाँश्छेत्तुं ये चाऽपि जना यत्नवन्तो, जवाहरलालनेहरूमहाभागः खल्वपि तेषामन्यतमः ।'

एतावत्तावदहमभाषे । अथाग्रे किम्भाषितव्यं भविष्यति ? मोहमापन्न इव तमसाच्छन्न इव च विद्यमाने मयि मदीयं वाग्यन्त्रं भूयोऽप्येवमुदगिरत्—'एतत्परतन्त्रतापाशान्विच्छेत्तुं स कियत्कृच्छ्रमापद्यत ह्यापद्यते चेदानीमपीति नैव वयं लघुनोपायेन वेदितुमर्हामः ।'

अग्रिमं वाक्यम्—'असावनेकक्रत्वः कारागारमप्यगच्छत् ।'

अग्रिमं वाक्यम्—'कदाचिदसौ पुलिशदण्डकाष्ठप्रहारमप्यसहत न वेति नाहं शक्नोमि वक्तुम् ।'

अग्रिमं वाक्यम्—'कदाचिदेष खल्वप्यनुभवस्तस्य गात्रगोचरतां गतो भवेत् ।'

अग्रिमं वाक्यम्—'परं कारागारमगच्छत् । वर्षगणान्

कारागारकुड्यावेष्टने संयतमात्मानमपश्यत्। इदमपि किमल्पीयो भवति ?'

अग्रिमं वाक्यम्—'कश्चित्पक्षी यः खलु रात्रिन्दिवं सुविस्तीर्णे नीलाकाशे यथेच्छं विहरति, वृक्षान्, वनस्पतीन्, पुष्पाणि, नदी-नदान्, अधित्यकाः, पर्वतांश्च दृष्ट्वा रवमुखरो भवति, तस्य निसर्गगतेभ्य एतेभ्यो वस्तुभ्योऽपसार्यैकस्मिन्पञ्जरान्तरे निगृह्य स्थापनमपि किमल्पीयो व्यसनस्थानम् ?'

वाक्यं द्राघीयः समजायत। आलोचयम् इदानीं प्रत्यनीकः पर्यायः श्रीधरमहाभागस्येति। एतावतो द्राघीयसो वाक्यस्य कन्नडीकरणं तस्य भाग्ये समागतम्। मनस्येवावोचमपि—'समीचीनं जातम्। यावदसौ वाक्यस्य खल्वस्य कन्नडीकरणं करिष्यति, तावदहं किमप्यग्रे वक्तव्यजातं विचिन्तयिष्यामी'ति परमसौ तावदेतावत एवांशस्य कन्नडीकरणमकरोत्—'कस्यापि पक्षिणः पञ्जरान्तरे निगृह्य स्थापनमपि किमल्पीयो व्यसन-स्थानमि'ति। एतस्मान्मन्ये प्रत्यनीकः पर्यायस्तु ममैव प्रत्यपद्यत। इतोऽपि मस्तिष्कं मे तमआच्छन्नमेवासीत्। अहमभाषे—'जवा-हरलालोऽपि तादृश एवारण्यको रवमुखरः समुत्प्लवनशीलः पुष्पैः, क्षुपैः साकं क्रीडनशीलश्चैकः पक्षी वर्तते।'

अग्रिमं वाक्यम्—'कश्मीर-मसूरी-नयनीतालप्रभृतिस्थान-वर्तिषु पर्वतशिखरेषु, निर्झरेषु, गहनेषु च पर्यटाट्यमानस्य जवाहरलालस्य यादृशमान्तरिकं सुखं प्रतिपद्यते, न तादृशं लक्षाधिकसंख्याकस्य जनसम्मर्दस्य समक्षं ध्वनिविस्तारण-यन्त्रस्य पुरस्ताद्दण्डायमानस्य लोककरतलध्वनिं शृण्वतस्तस्य प्रतिपद्यते जात्विति मदीयमन्तःकरणं मामुपदिशति।'

अग्रिमं वाक्यम्—'एतादृशस्य निसर्गप्रियस्य, स्वच्छन्दं विचरणशीलस्य च जनस्य कारागारगतानां लौहशलाकानां पृष्ठतो नापि खल्वेकस्मै दिवसाय नापि खलु द्वाभ्यां दिवसाभ्यां किन्तर्हि वर्षानुवर्षम् अवस्थानं भवति। एतेन तस्यात्मा कीदृशीं प्रच्छन्नां मानसिकीं यन्त्रणामनुभवतीति शक्ष्यन्ति भवन्तः सम्यगनुमातुम्।'

एतावन्ति वाक्यानि प्रयुक्तवतो मम मस्तिष्कगतं तिमिर-पटलं शनकैः प्रारभतापयातुम्। विचाराणां मुकुलो विकस्वर-तामभजत। अहमभाषे—'परं केषां कृते खल्विमाः सर्वा यन्त्रणाः? यः क्षणिकमपि नैव क्षमते मानसिकं बन्धनं सोढुम्, स वर्षानुवर्षं शारीरिकाणि बन्धनानि सहेत—अहं पृच्छामि, एतावदधिकं कृच्छ्रजातं स केषां कृते खल्वङ्गीकरोति?'

अग्रिमं वाक्यम्—'अस्माकमधन्यानां कृते—अस्माकमधम-भागधेयानां कृते—अस्माकं हीनसत्त्वानां कृते।'

अग्रिमं वाक्यम्—'यदि जवाहरलाल इंग्लैण्डदेश उदपत्स्यत तर्हि ध्रुवमेवाद्य स चरचिल्लस्य, शम्बरलीनस्य च पदमलमक-रिष्यत्। यद्यमेरिकादेश उदपत्स्यत तर्हि रुद्धवेल्लितस्य स्थाने स एव प्रत्यष्ठापयिष्यत। कृत्स्नमपि भूमण्डलं महतो राष्ट्र-नायकस्य रूपेण सप्रभूतादरं तमपूजयिष्यत्। परमेष खल्वस्माक-मेव हीनभागधेयानां देशो, यत्र वयं स्वकीयान् श्रेष्ठजननायकान् कारागारगतलौहशलाकानां पृष्ठतः संयतान् वीक्षामहे, समाचार-पत्रेषु प्रकटितमेवंविधं व्यतिकरजातं खल्वधीयामहे, निभृतं चास्महे—सुतरामकिञ्चित्करा इव।'

अथ किं वक्तव्यमिदानीम्? ममैवाश्चर्यातिशयोऽन्वभूयत।

अहमव्याहतमभाषे किञ्चेदृशं किञ्चिदभाषे, येन स्वेनैव हस्तेन स्वकीयं स्कन्धदेशं घट्टयितुमभिलाषः समजनि। मम मुखाद् उद्गम्यमानमेकैकं वाक्यमनुभावविशेषोपेतं सत् श्रोतॄणां मनांसि समाचकर्ष। नाहमाशासि यदीदृशमुत्कृष्टम्, ईदृशं सुशृङ्खलम्, ईदृशं प्रभावोत्पादकं चाहं क्षमिष्ये भाषितुम्—तच्चापि विनैव पूर्वसज्जया।

अन्ततोऽहमभाषे—'भ्रातरः, परतन्त्राः खल्वद्य वयम्। परं श्वो नूनं स्वतन्त्रा भवितास्मः। तदा वयं स्वतन्त्रस्याऽऽकाशस्याधस्तात् स्वतन्त्रस्य च धरणीपृष्ठस्योपरि भूयोऽपि जवाहरलालनेहरूमहाभागाणां जन्मदिनमुपलक्ष्यीकृत्य ससमारोहमुत्सवमङ्गलमायोक्ष्यामहे। अद्यतनोऽनभिषिक्तोऽस्माकमेष हृदयसम्राट् श्वस्तनः स्वतन्त्रभारतस्याऽभिषिक्तश्चक्रवर्ती सम्राड् नैव भवितेति कः क्षमते वक्तुम् ?'

समाप्यत मे भाषणम्। कन्नडीकरणं चापि समाप्यत। अहं मनस्यालोचयम्—'भवतु। कथन्तु नाम मुक्तोऽस्मि महतो व्यसनौघाद्' इति। परमहो नु खलु भोः, नाऽऽसमहं परमार्थमुक्तः। कथम्पुनर्दण्डकाष्ठमुच्छ्रित्य प्रजवं सम्प्रहर्तुमुद्यतस्यानुपततो दुर्दैवपिशाचहतकस्य हस्ताद् मुक्त इति कोऽपि वराकः शक्नोत्यात्मानं सम्भावयितुम् ?

उत्कृष्टं भाषणं यत्राभ्युदयकारि भवति तत्र तदेव केषुचित् प्रसङ्गेषु महान्तममङ्गलौघमपि प्रसूते। श्रीधरमहाभागोऽब्रवीत्—"बहु मनोहरं भाषते भवान्। ईदृशीं प्रतिभां कलयति भवानिति नैव व्यजानीम वयम्। अद्य सायं समये केङ्गेरिग्रामे नेहरूमहाभागाणां जन्मदिनोपलक्ष्ये सार्वजनिकी खल्वेका

सभाऽऽयोक्ष्यते। तत्रापि भवान् भाषताम्।"

'कथमपि भङ्क्त्वा बलाद्वागुरां निष्पतितो मृगपोतः कूपान्ते पतित' इति या भणितिस्तत्रोक्ता दशा ममापि समजायत। अत्र यदि नाहमेतावदुत्कृष्टमभाषिष्ये नेदं तर्हि महद् व्यसनं सार्वजनिकसभायां भाषणनिबन्धनमापतिष्यन्मम मूर्ध्नि। अद्य प्रसन्नाऽऽसीद् भाग्यदेवतेति कृत्वा च्छात्राणां पुरतो यथा कथमपि निरवाहयम् प्रतिपन्नं वस्तु। परं सार्वजनिक्यां सभायां कथं प्रतिपत्स्यते निर्वाहः? आत्मन्येवात्मना हाहाकारमकरोद् मदीयं मनः। हन्त, कियदिव समीचीनं समजनिष्यत यद्यहं किमपि निकृष्टतरमभाषिष्ये। इदं नूतनं व्यसनं तु नैवापतिष्यद् ममोपरि! यदृच्छयैकदा कस्यापि भाषणं शोभनमजायत तर्हि प्रतिवेलं स तथैव शोभनं भाषिष्यत इति नैव वक्तुमुचितम्।

भूयोऽप्यालोचयम्—'कस्माद्विगाह्यते्तैष विषमः? यदा भविष्यति वेला भाषितुं तदा सर्वं द्रक्ष्यते। परमेश्वरेच्छया तत्रापि शोभनमेव भाषिष्यामहे। अत्र यथा निरवहामहि तत्रापि तथैव निर्वक्ष्यामह' इति।

तदेवं तन्निबन्धनं कृत्स्नमपि विमर्शजातमेकपद एव पर्यत्यजम्।

× ×

श्रीरामपुरे केवलं स्नानादिकं प्रातराहारादिकमेव निरवर्त्यत। मुख्यं भोजनमद्य केङ्गेरिग्राम एव भाव्यासीत्।

श्रीधरमहाभागेण सह बेंगलूरनगरस्थं प्रधानं बाष्पगन्त्री-प्रस्थानकमायाम्।

केषाञ्चिन्निकृष्टानामपि नगराणां बाष्पगन्त्रीप्रस्थानका

अतिमात्रं नेत्राकर्षका भवन्ति । परमत्र तस्य वस्तुनो नितरां विपर्यासोऽवालोक्यत । अतिमात्रमुत्कृष्टेऽपि नगरे प्रस्थानकः सर्वथा निकृष्टः समवर्तत । इदमहं श्रीधरमहाभागमवेदयम् । असावपि तथ्यमिदमभ्युपागच्छत् ।

श्रीधरमहाभागस्य पादौ सर्वदाऽक्लिश्नीताम् । अधिकं परिभ्रमणं स सर्वदेत्र पर्यजिहीर्षत् । परं कथं सम्भवमासीदिदं तद्विधस्य सार्वजनिककार्यकर्तुः ? तस्मादनिच्छन्नपि स प्रचुरमाटाट्यत । कदाचित्पद्भ्यां, कदाचिद् बाष्पगन्त्र्या कदाचिच्चाप्यन्येनैव केनापि यात्रासाधनेन । बाष्पगन्त्र्या विहरन्नसौ सर्वदा द्वितीयायां श्रेण्यामेव न्यषीदत् । यात्राक्लेशान्नैव शक्यत आत्मा मोचयितुं परं तृतीयायां श्रेण्यां निषदनस्य क्लेशात्तु शक्यत एवासौ मोचयितुम् ! स द्वितीयायाः श्रेण्या यात्रापत्रमक्रीणीत । यावताऽहमपि तेनैव सहाऽभवम् ततो ममापि यात्रापत्रं द्वितीयाया एव श्रेण्याः पर्यक्रीयत ।

द्वितीयायां श्रेण्यां निषदनस्य यावत्यपि ममायुष्येष एव प्रथमः प्रसङ्गः । एतावता, इयमपि यात्रा नवीनं कुतूहलमिवाभवन्मम । यस्यां बाष्पगन्त्र्यामावां न्यषीदाव तस्या नामाभवत्— M. S. R. इति । हैदराबादराज्ये या बाष्पगन्त्री तस्या नाम— N. S. R. इति । तत्र S. R. इत्येतावानंश उभयनिष्ठः । भेद आसीत्केवलं N. किञ्च M. इत्येतस्यैव । परं क्व सा N. S. R. बाष्पगन्त्री क्व चेयं M. S. R. बाष्पगन्त्री ? अहमासि द्वितीयायाः श्रेण्याः शिवके[1] परमन्वभवम् कस्मिंश्चित् तृतीयश्रेण्याः

१. शिवकः='रेल का डिब्बा' इति भाषायाम् ।

शिबक आस इति। उभयविधयोः शिबकयोरयमेव विशेषो यदेकस्मिन् लोकसम्मर्दः प्रमाणमतिक्रम्यासीदपरस्मिंश्च स प्रमाणमनतिक्रम्यासीत्। शिबकरचनायां नाहं कमपि प्रभेदमपश्यम्। नूनं नैव कदापि N. S. R. बाष्पगन्त्र्याः प्रथमश्रेण्या द्वितीयश्रेण्या वा शिबके निषद्य प्रवाससौख्यमन्वभवमहमेतस्मिन्नायुषि तथापि सिकन्दराबादवर्तिनि बाष्पगन्त्रीप्रस्थानकेऽवस्थितानामवसितयात्राव्यापाराणां रिक्तगन्त्रीणां तेषु तेषु शिबकेषु प्रविश्य तत्तद्दर्शनसौख्यमहमवश्यमन्वभवम्। तस्मादेव जानाम्यहं कीदृशा मनोऽभिरामा वैभवाढयाश्च तद्गन्त्रीशिबका भवन्तीति। अहो नु खलु भोः, द्वितीयश्रेण्याः शिबक आसादितोऽपि M. S. R. बाष्पगन्त्र्याः! हन्त!

बाष्पगन्त्री प्रातिष्ठत। बेंगलूरनगरोपशल्यगतानि दृश्यान्यदृश्यन्त। यत्र तत्र धान्यक्षेत्रेषु सुदूरं यावद् दृष्टिगोचरतां गम्यमाना विद्युत्तन्त्रस्तम्भपङ्क्तयो गैरिकवर्णैर्बेङ्गलूरपटलकर्परकैः[1] समाच्छादिताः संवसथावसथच्छदयश्च।[2] एभिः पटलकर्परकैः संवसथगताः सामान्या आवसथा अपीश्वरसद्मानीवाऽवैक्ष्यन्त। सुदूरवर्तिनो धान्यक्षेत्रमध्यगता एवंविधाः संवसथा अतिमात्रं शृङ्गारपरिपूर्णा अदृश्यन्त।

बेंगलूरनगराद् मैसूरनगरं प्रति संसर्पति बाष्पगन्त्रीसंसरणे[3] 'केङ्गेरि'रित्ययं प्रथमो गन्त्रीप्रस्थानकः। द्वितीय-

---

१. पटलकर्परकः='खपरैल' इति भाषायाम्।

२. संवसथो ग्रामः; आवसथो गृहम्; छदिः='छत' इति भाषायाम्।

३. बाष्पगन्त्रीसंसरणम्='रेलवे लाइन' इत्यर्थः।

श्रेण्यां निषद्य क्रियमाणा यात्रेयं दुरदृष्टवशादतीव संक्षिप्ताऽभवत्।

'केङ्गेरि'रित्ययं लघुः प्रस्थानकः सन्नपि सुतरां नेत्राकर्षकः प्रत्यभात्। तं प्रस्थानकं पृष्ठतः कृत्वाऽऽवां केङ्गेरिसंवसथे समायाव। तमपि पृष्ठतो विधाय सर्वथाऽसङ्कुलेषु धान्यक्षेत्रेष्वागच्छाव। आवाभ्यां तत्रत्य एकस्मिन् वैदिकब्रह्मचर्याश्रमे गन्तव्यमासीत्। स आश्रमस्तस्मात्स्थानादनतिदूर एकस्या नद्यास्तीरे राजते। श्रीधरमहाभागस्य यवीयान् भ्राताऽस्याश्रमस्य कार्यसञ्चालकः। ज्यायान् भ्राता गृहीतसंन्यासः संस्थापकश्चास्याश्रमस्य। श्रीधरमहाभागस्यैका कुटी खल्वत्रापि विद्यते। यदा कदाचिद् बेंगलूरनगरनिवासाद्विरज्यते तदीयं मनस्तदाऽसावत्राऽऽगत्य विश्राम्यति।

सर्वथा भोजनसमये तत्रावां प्राविशाव। तस्माच्छीघ्रमेव भोजनागारमगच्छाव। भक्तं साम्भारश्चावण्डयेताम्। सूप एव निक्षिप्य शाकादिकं साधयन्ति, स एव चाऽत्र 'साम्भार' इति निगदितो भवति। शाकानां निक्षेपेण ह्ययमतिमात्रमास्वादनीयः सञ्जायते। निरवर्त्यत भोजनं निष्प्रत्यूहतया।

तत उत्तरकालमावां श्रीधरमहाभागस्य कुटीमुपागच्छाव। तत्राप्यवर्तत शिविरखट्वा खल्वेका। कञ्चित्कालं तत्राशयि। व्यश्राम्यम्। तदनु श्रीधरमहाभागप्रणीतं कन्नडभाषागतं महाकाव्यमेकं पठितुं प्रावर्ते। एकतस्तदपठम् अपरतश्च श्रीधरमहाभागमपश्यम्। कीदृशी कृतार्थताऽन्वभूयत तदा, यदाहमालोचयम् एकस्य कन्नडमहाकवेः सान्निध्ये निषण्णोऽस्मीति ! महाकवीनां साहित्यप्रणेतृप्रवराणां महज्जनानामेतादृशं सान्निध्यं नास्त्यल्पी-

यसो भागधेयस्य फलम् । तदर्थं प्राक्तने जनुषि सुकृतसहस्रस्यो-पार्जनं कर्तव्यं भवति ।

किञ्चित्कालानन्तरं श्रीधरमहाभाग उदतिष्ठत् । तैलज्वा-लायन्त्रं च प्राज्वलयत् । ब्रह्मकषायपानं[1] तस्मै भृशं रोचते। प्रकामं पिबति । स्वयमेव तं निष्पादयत्यपि ।

एकस्मिन् वङ्गे वर्धमानक उष्णोष्णं ब्रह्मकषायमुम्भित्वा मम सम्मुखमुपास्थापयत् । यद्यपि नास्त्यतिमात्रमभिमतः सामान्यतया मे ब्रह्मकषायस्तथापि श्रीधरमहाभागेण स्वयं निष्पादिते ब्रह्मकषाये कश्चिदनितरसाधारणोऽन्वभूयतास्वादः।

श्रीधरमहाभागस्य यवीयानस्ति श्रीमान् विद्याधरनामा। असावपि तत्राऽऽगच्छत् । मां परिचाययन् श्रीधरमहाभागस्तं प्रावोचत्—"एष महाभागो विकासनामा जनार्दनसूनुः पण्डितो-पाह्वः । महाराष्ट्रीयः सन्नपि हिन्दीभाषां सम्यग्जानाति । तस्यां समीचीनतया भाषितुमपि क्षमते । अद्य सायन्तन्यां सभायामयमपि यथा भाषेत तथा विधीयताम् । अद्य रात्रावयमत्रैव तिष्ठतु। श्वो बेंगलूरमागमिष्यति । अहं पुनः कार्यगौरववशात् सम्प्रत्येव बेंगलूरं गच्छामि । अस्य महाभागस्याऽऽहाराऽभ्यवहारादिकस्य समुचितः प्रबन्धो विधेयः ।

एतदुक्त्वा श्रीधरमहाभागस्तु बेंगलूरं प्रायात् । अथाह-मात्मानं सर्वथैकाकिनमन्वभवम् । तत्र मदर्थं सर्वेऽप्यपरिचिता आसन् । परस्ताच्च सर्वे कन्नडभाषिणः । अहं तां कुटीं विहाय न क्वाप्यन्यत्राऽगच्छम् । ऐतस्ततत्यानि द्वित्राणि पुस्तकान्यपठम्। अद्य सायं समये सार्वजनिकसभायां भाषणस्य यन्महद् व्यसन-

१. ब्रह्मकषायः='कॉफी' इत्यर्थः ।

मापतिष्यमाणमस्ति कथं तत्प्रतिभटनीयं भविष्यतीति व्यालोचयम् चापि ।

अस्तमनवेलायां कुट्यामेव तस्यामवस्थानं दुष्करमिति मत्वा निभृतमेव कुट्या निष्क्रम्याहं नद्यास्तीरेऽगच्छम् । तस्या नामाऽभवद् वृषभावतीति । तस्यास्तीरे न्यषीदम् । जलं प्रावहत् । अधस्तान्नद्यास्तले कर्करका अविद्यन्त । तैः सह निघर्षं प्रतिपद्यमानं यदा तत् प्रावहत्तदा तस्मिन्नेको निनादविशेषः प्रादुरभवत् । जलस्य पृष्ठं विचित्रामेवाऽऽनायाकृतिमधारयत् । स निनादः, स चाऽऽनायाकृतिर्जलप्रवाहः कामप्यपूर्वां शान्तिं, शीतलतां, निश्चिन्ततां चादधात् । तमवेक्ष्य मम मनो निर्वचनातीतां तल्लीनतां समाधिं चान्वभवत् ।

नद्यः खलु मह्यमतीव रोचन्ते । तद्दर्शनसमकालमेव मम चक्षुषी सुप्रफुल्लकमलपुष्पमिव विकस्वरे संजायेते । तद्गतैर्मत्स्यैः सह बालक्रीडां क्रीडितुमारभते मे मनः । स्वच्छं सुवीध्रं तोयं स्यात् तच्च सवेगं प्रवहेत् तर्हि तदवलोक्य मनुजस्य मनः स्वयमेव शीतलं संजायते । मस्तिष्कं प्रत्यग्रां कामप्यार्द्रतामनुभवति । किञ्च विश्रान्तिमिव, नूतनां शक्तिमिव धत्ते । अहमपि तस्यामस्तमनवेलायां—यदाहि मनो निष्कारणमेव ग्लास्नुतां प्रतिपद्यते—वृषभावत्यास्तीरे शक्तिं स्फूर्तिं चान्वभवम् ।

अभितो धान्यक्षेत्राण्यासन् । तेषु दृष्टिगोचरीभूता विद्युत्तन्त्रस्तम्भा विष्वग्गतयः सुदूरं यावद् विभिन्नान् संवसथान् अभिप्रयान्ति स्म । (नि)सर्गस्य प्रति(नि)सर्गस्य चाद्भुतः सम्भेद आसीत् । अहं सन्ध्यातुमैच्छम् । एकान्तं वीक्ष्य खल्वेकस्मिन्नुद्देशे बद्धपद्मासनः सन्नहं स्वचक्षुषी न्यमीलयम् ।

चक्षुषी उदमीलयम् । हठात् तद्दिनमस्मरम् यदैवमेव चक्षुषी निमील्य स्थिते मयि कुसुमलक्ष्मीः समागत्य प्रावोचत्— 'शृणोतु । अहमागतास्मी'ति । अद्य कस्तादृशं वक्ष्यति ?

एवमालोचयति मयि पृष्ठतः कश्चन मामेवाकारयत्। अहं चकितः सन् मुखं व्यावर्त्य पृष्ठतोऽपश्यम् । विद्याधरमहाभागो मम सन्ध्यावन्दनाद्यवसानं प्रतिपालयन्नतिष्ठत् । सोऽवदत्— "अप्यवसितम् भवदीयं सन्ध्यावन्दनम् ? अथ भोजनार्थमुपागम्यताम् ।"

अहमवोचम्—"बाढम् । अवसितं खलु तत् । भवतोच्यताम् । भवान् कथमत्र सम्प्राप्तः ?"

"अद्य सर्वेषां सान्ध्यकालिकं भोजनं तूर्णमेव भाव्यासीत्। एकं छात्रं भवदन्तिके प्राहिणवम् । भवाँस्तत्र नास्तीत्यजानाम्। अन्यः खल्वेकश्छात्रोऽज्ञापयद् भवान्नदीतीराभिमुखमगच्छदिति। तस्मादहमेव सायन्तनभ्रमणाभिलाषी तत्रभवन्तं द्रष्टुमिहाऽऽगतोऽस्मि ।" विद्याधरमहाभागोऽब्रवीत् ।

ततस्तस्मात्स्थानादावामुभावप्याश्रममनुप्राप्नुव । भोजनशालायामहं विद्याधरमहाभागस्य समीपमेवाऽऽसि । तस्य भार्याऽपि तत्र भोजनार्थमास्त । सा सर्वथा तस्याभिमुखं परस्यां पङ्क्तावासीत् । अभितोऽनुभोजनशालाकुड्यं पङ्क्तिक्रमेण च्छात्रा आसत । अविलम्बितमेव सर्वा भोजनसामग्री खल्वस्मत्समक्षमायात् । उच्चकैः सस्वरं च सर्वे छात्रा वेदमन्त्रानपठन् भोजनं प्रारभ्यत । मम पत्रावल्यां भक्तमासीत्; साम्भार आसीत् आसीच्चैका लेह्या । छात्रेभ्यो मोदकप्रकारकं किमपि भोज्यं वस्तु वण्ड्यमानमहमपश्यम् । अयमद्यतनः पक्वान्नविशेष

कश्चन भवेदित्यालोचयम् चापि। परं यदा स वण्डमाणवको मम समीपमायात्तदा विद्याधरमहाभागस्य संज्ञां गृहीत्वा मां विहायैवाग्रतः प्रासर्पत्। एतेन खल्वहं किञ्चिददूये। मोदकः खल्वेको मह्यमपि प्रादास्यत चेत् तेन तेषां किमप्यपाचेष्यत किम्? भवतु। निभृतमासि।

अन्यस्मिन् पर्याये भूयोऽपि स वण्डमाणवको गृहीतमोदको मामुपायात्। विस्मरणेन वा संभ्रमेण वा मोदकं खल्वेकमसौ ममापि पत्रावल्यामगालयत्। स्वमुखाभ्यान्तरे सात्यौत्सुक्यं तन्मोदकक्षेपणसमकालमेव नीरसं करीषं कमपि चर्बामीवेति प्रत्यैयत। सर्वथा तज्जातीयक एवाऽऽसीत्तस्यास्वादः। इदानीमबुध्ये कस्माद्विद्याधरमहाभागस्तं वण्डमाणवकं मां व्यत्येतुं समचोदयदिति। अहमन्यान् अभ्यपश्यम्। सर्वे मोदकं करेण चूर्णयित्वा साम्भारेण च मिश्रयित्वाऽभुञ्जत। तदानीं खल्वहमजानाम् इमे 'रागीमोदकाः' सन्तीति। 'रागी'त्येतदस्य प्रदेशस्य विशिष्टमन्नं वर्तते। अत्रत्या जना रागीनामकं धान्यं पेषण्यां पेषयित्वा तत्पिष्टस्य रोटिकां वा पोलिकां वा नैव स्वेदयन्ति; किन्तर्हि मोदकं स्वेदयित्वा रोटिकास्थाने तमेवोपयुञ्जते। अहं खल्वप्यन्यजनानुकारं तम्मोदकं चूर्णयित्वा साम्भारेणाऽमिश्रयम्। भोक्तुं चोपाक्रमे। बहुतरं प्रयत्याऽपि यथा रागीमोदको रोचेत मह्यं नैवापारयम् तथा कर्तुम्।

भारतीयानां तत्तद्राज्यानां भोजनं रुचिपूर्वकं भोक्तुं शक्नोमीत्यगर्वमहमतिमात्रमद्यावधि। परमेभी रागीमोदकैः खर्वीकृतः सर्वोऽपि स गर्वः। कर्णाटकीयस्यैतस्यान्नस्य पुरस्तादहं नूनं साष्टाङ्गप्रणिपातमकरवम्। अत्र प्रथमतः खल्वहं स्वकीयं

पराजयं स्वीचक्रे ।

अद्य साम्भारे यच्छाकं ते प्रायुञ्जत तस्य कन्नडभाषागतं नाम 'सीमे बदनेकाया' इति। तस्यार्थः 'परदेशीयं वृन्ताकमि'ति। एवन्तु नानेदं शाकं हैदराबादनगरे सुलतानबाजारगतायां शाकमण्डिकायामनेककृत्वोऽद्राक्षमहम् । परमनया रीत्याऽभ्यवहरणस्यायं प्रथम एव पर्यायः। हरितवर्णो लम्बवर्तुलवज्रबीजफलसन्निभ एष पदार्थोऽन्यावस्थायां भक्षणे कथं प्रतिभातीति नैव वक्तुं शक्यते। परं साम्भारे निक्षिप्तस्तावदतीव रुचिरः प्रत्यभात्।

भोजनानन्तरं केङ्गेरिं प्रति गन्तव्यमासीत् । विद्याधरमहाभागेण सह सम्यक् परिचयो जातः । नानाविधगोष्ठीकथाऽऽलापानन्तरं कन्नडवाङ्मयमुपजीव्याऽचर्चयावहि । तद्वाङ्मयसम्बन्धीनि बहूनि बहुमूल्यानि ज्ञातव्यवस्तून्यजानाम् । यावन्मात्रं मराठीविषये ममत्वभावमनुभवामि तावन्मात्रे खल्वविद्यमानेऽपि कन्नडभाषाविषये ममत्वभावे, दक्षिणभारतस्य सर्वाधिकसुव्यवस्थितभाषात्वेन कारणेन तस्या विषये भृशमादरभावं कौतूहलं च कलयाम्येव । एतस्मात्कारणात् तद्विषयकज्ञातव्यवस्तुविज्ञानेनाहमात्मानमत्यर्थं लाभान्वितमन्वभवम् ।

विद्याधरमहाभागो हिन्दीभाषाया अपि महानुपासको ज्ञाता च । अतीव परिष्कृतां हिन्दीभाषामभाषत । तस्यार्द्धाङ्गिन्यपि हिन्दीभाषां सम्यगजानात् । केङ्गेरिग्रामे रात्रौ सभायां मम भाषणं कन्नडीकर्तुं विद्याधरमहाभागस्तामेव न्ययुङ्क्त ।

भोजनं विधाय छात्रैः समवेता वयं सर्वे केङ्गेरिं सम्प्राप्नुम। शतं वा अध्यर्धशतं वा जनास्तत्र समुदिता आसन् । मदीयं प्रथममासीद् भाषणम् । विद्याधरमहाभागस्य भार्या तत्कन्नडी-

कर्तुमुदयच्छत्। परं नापारयत् चिराय तथा कर्तुम्। नात्र तदीयो भाषाज्ञानाऽभावोऽपाराध्यत्। मम भाषणप्रकार एवाऽपाराध्यत्। मदीयं भाषणमतिमात्रं विपर्यस्तमासीत्। यथा भवितव्यं तेन तथा नाभवत्। सा कन्नडीकरणात्पराजयत। पर्यहिणोच्चापि तत्। अन्य एव महाभागः समायात्। येन केनापि प्रकारेणासौ निरवाहयत्। भवतु। नाहमेतत्कालिकं भाषणं स्वकीयं प्रत्यनन्दम्। विपर्यस्तं वक्तव्यवस्तु; विपर्यस्ता भाषा; विपर्यस्तं सर्वमेव।

कथमपि भाषणमसाध्नवम्। मदनन्तरं विद्याधरमहाभागो भाषणार्थमुदतिष्ठत्। स कन्नडभाषायामभाषत। तादृशमोजःपूर्णं, परिष्कृतं, सुव्याकृतम्, अस्खलितं च कन्नडभाषागतं भाषणं यावति जीवन एतत्प्रथममेवाश्रृणवम्। 'सन्दर्भशुद्धिर्गिरां' तत्र साधुतया प्रतिपदं न्यदृश्यत। नाहमक्लिश्यम् तद्भाषणार्थग्रहणे। संस्कृतभाषाशब्दास्तु पर्यचीयन्तैव बहवो मूलकन्नडभाषाशब्दाः खल्वपि पर्यचीयन्त।

स जवाहरलालनेहरूमहाभागस्यार्द्धाङ्गिन्याः स्वनामधन्यायाः कमलानेहरू इत्याख्यायाः कर्तृत्वं व्यवृणुत। पण्डितनेहरूमहाभागस्य जीवनोत्कर्षाधाने बहुतरो भागस्तस्या एव कर्तृत्वमनुबध्नाति। तस्यास्त्यागः, कष्टसहिष्णुता, व्रतनिष्ठा, दृढतेत्येवमादयो गुणा नेहरूमहाभागस्य जीवनेऽतुलं साहाय्यमकुर्वन्। पुरुषस्य स्वकीयं कर्तृत्वं प्रति तस्य जीवनसङ्गिन्या ज्ञातमज्ञातं वा कर्तृत्वं बहूपकरोतीत्येतत्तत्त्वं तद्भाषणमाकर्णयं विदम्।

वयं सर्वे केङ्गेरितो ब्रह्मचर्याश्रमं न्यवर्तामहि। अनुमार्गं स्वकीयं शुष्कं नीरसं, निःसारं च भाषणमनुचिन्तयन् म्लानमना

अगच्छम् ।

अद्यत्वे खल्वपरिचिता, अश्रुतपूर्वाः, पाण्डित्यबोधका, दुर्बोधाः शब्दा अतिमात्रं ललितवाक्यप्रबन्धा वा नैव भाषण-साफल्याय कल्पन्ते । सफलं तदेव भाषणं यत्सारवद् भवति, सुबोधं भवति, किञ्चादितोऽन्तं यावत् सुव्यवस्थितं भवति ।

स्वकीयं भाषणनिबन्धनं वैफल्यमनुशोचन्नहं भृशमग्लायम्। परं सर्वोऽपि जनः सर्वेष्वपि विषयेषु सर्वकालं साफल्यमधिगच्छत्येवेति नास्ति नियमः । तस्मात्स्वकीयं कार्यवैफल्यमनुपश्यता नैव केनापि व्यथितव्यं जनेन । किञ्च यावच्छक्यं तस्मादपि कार्यवैफल्यात् कश्चिद् बोध एव ग्रहीतव्यः ।

एतदेवालोच्याहं धैर्यमवलम्ब्य स्वकीयं म्लायमानं चित्तं समाश्वास्य च कैश्चिदेव क्षणैर्विस्मृतवैफल्यव्यापारसंवेदनः स्वात्मानं पर्यवस्थापयम् ।

## पञ्चमः समुच्छ्वासः ।

'ओ३म् अग्नये स्वाहा ।
इदमग्नये । इदं न मम ॥
ओ३म् वायवे स्वाहा ।
इदं वायवे । इदं न मम ॥
ओ३म् प्रजापतये स्वाहा ।
इदं प्रजापतये । इदं न मम ॥'

प्रातर्यदाऽहं श्रीधरमहाभागस्य कुट्यामजागरम्, तदाह्य परिसंशब्दिता आहुतिमन्त्रा मम कर्णयोरपतन् । झटित्युदतिष्ठमहम् । बहिरागत्य व्यलोकयम् आश्रमब्रह्मचारिणो यज्ञमण्डपे वर्तुलाकारमासते मध्यभागे च यज्ञकुण्डस्य समीपमासीना व्रतिनो मन्त्रोच्चारणपूर्वकमग्नौ घृताहुतीरावर्जयन्तीति । एकैकेन स्वाहाकारेण सह स्रुवामितं घृतं मुष्टिमिता च सामग्री हुतवहे न्यपताम्, हुतवहस्य सौम्या ज्वालाऽधिकया दीप्त्या प्राज्वलत् किञ्च यज्ञकुण्डसमीपस्थानां ब्रह्मचारिणां स्वास्थ्यपरिपूर्णा आकृतयस्तस्या ज्वालायाः प्रतिबिम्बेन सविशेषं प्रादीप्यन्त । तेषां साऽऽभा समुदितेन च कण्ठेन क्रियमाणं शास्त्रशुद्धं सस्वरं च वेदमन्त्रोच्चारणमतिमात्रं मनोहरं प्रत्यैयत । अहमात्मन्येवात्मना भृशमत्रपे कस्मादहमेतावन्तं कालमस्वपम्, कस्मान्न ब्राह्ममुहूर्त्ते उत्थाय स्नानादिकं निर्वर्त्य नूतनं धौतवस्त्रं परिधाय चैषां ब्रह्मचारिणां पङ्क्तौ प्राभातिकायाऽग्निहोत्रायोपाविशमिति । परं किमिदानीं सेत्स्यत्यनया त्रपया ? निःशब्दमेवाहं तस्मात्स्थानादपासर्पम् वृषभावत्यास्तीरे च सम्प्राप्नवम् ।

प्राभातिकेषु रविकिरणेषु चकासत्यास्तस्या बालजलधारायाः कलकलमेतस्मात्समन्त्रादग्निहोत्रान्न्यूनमासीत्किम् ? अहं मनस्येवावोचम् नाहं तस्मिन्नग्निहोत्रे सम्मिलितुमशक्नवम् तर्हि न भयस्य कारणम् । इदं तावदग्निहोत्रं प्रवर्तत एव सम्मिलितुमिति । यथा हुतवहज्वालानां प्रतिफलनेनाऽऽहुतीरावर्जयतां व्रतिनां मुखेषु सविशेषं काचिदाभा दृष्टिगोचरतामगच्छत्, तथैव सूर्यहुतवहप्रतिफलनेन नद्यप्येषा खल्वाभामयी समजायत । यथा ब्रह्मचारिणः सस्वरं वेदमन्त्राणां पाठेन वातावरणं सङ्गीतमयम-

कुर्वन्, तथैवेयमपि स्वकीयेन कलकलनिनादेनेदं निर्जनं वातावरणं सङ्गीतमयमकरोत्। अहमप्यस्या नद्या अग्निहोत्रे सममिलम्।

आदौ किञ्चित्कालं यावत् तस्याः पुलिने समुपाविशम्। पश्चाच्च वस्त्राण्यवतार्य नद्यां जलक्रीडां कर्तुमारभे। अस्मिन्नुपह्वरे[1] खल्वेतादृशीं जलक्रीडां कुर्वन्नहं हठादेव तेषां दिवसानामस्मरम् यदाहं पञ्चवर्षदेशीयो बालक आसम्। जननी तेषु दिवसेषु वस्त्राणि क्षालयितुमस्मत्संवसथप्रत्यासन्नां नदीमगच्छत्। अहमपि तयैव सार्द्धं तत्रागच्छम्। सा तत्र यात्वा पाषाणानामुपरि वस्त्राण्यक्षालयत्। अहं च तस्या नद्या निर्मले जल इतस्ततः क्रीडामकरवम्। सा नद्यपि तावत्येवासीद् यावतीयं वृषभावत्यवर्तत। कदाचिद् वर्षास्वचिरेणैव तस्यां तोयमवर्धत। सर्वथा गैरिकवर्णं पङ्किलप्रायं तोयम्। तोयस्य रंहोऽप्यवर्धत। गभीरताऽप्यवर्धत। इतस्ततो नदीपात्रे विकीर्णा भग्नखर्जूरिकाप्रकाण्डास्तस्मिँस्तोये प्रावहन्। तस्यां वेलायां नद्यास्तामभिख्यां द्रष्टुमनाः सर्वोऽपि संवसथस्तस्या नद्याः सेतौ समगच्छत्। संवसथस्थाः प्लवनपटवो माणवकास्तस्मिन् प्रवृद्धे तोये प्लवनस्य किञ्च सेतोरुपरिष्टादधः कूर्दनस्य निर्भरमानन्दमन्वभवन्।

तदानीं नाजानामहं प्लवनविद्याम्। प्लवनविद्यायाः प्रारम्भिकान् पाठानगृह्णाम्। एतावता तैः प्लवनपटुभिर्माणवकैः सह नाशक्नवमवतरीतुं तस्मिन् प्रवृद्धतोये। तथाप्यतिमात्रं सतृष्णाभ्यां नेत्राभ्यां तेषां माणवकानां तां जलक्रीडां तस्य

---

१. उपह्वरः—A solitary or lonely place.

सेतोरुपरि स्थितः सन्नपश्यम् । हन्त, नद्यास्तस्मिन् सजीवे, रंहःशालिनि, चपलतरे च प्रवृद्धतोयप्रवाहे प्लवनार्थमवतरीतुं कियदकामये तदानीमहम् ।

भवतु । अथ पर्यवसितायां स्नानक्रियायाम् अहं वृषभावत्या-स्तस्या एव जलधारायाः समीपम् बद्धपद्मासनः सन् ब्रह्मध्याना-ऽभ्यसनविधिना योगनिद्रामगच्छम् ।

प्रभातगते तस्मिन् सुवर्णमये समये निष्कलुषायाः कलकल-निनादशालिन्यास्तस्या जलधारायास्तीरे चक्षुषी निमील्यावस्थान-मेवालम्—चित्तगताः सर्वाः खल्वपि चञ्चलताः सर्वे खल्वपि च विक्षेपाः स्वयमेवापयान्ति । यदि कस्यापि हृदयं जगतो विषमतरैर्निदारुणैश्च घातप्रतिघातैर्विदीर्णं भवेत्, मानसिकी-भिश्चञ्चलताभिर्मस्तिष्कगतैः क्षोभविक्षोभैश्चाहर्निशं तस्या-ऽभ्यन्तरे कश्चन भीषणश्चितोपद्रवो विजृम्भितो भवेत्, स ह्रीमां योगनिद्रामवश्यमेकदा प्रयुञ्जीत । जगतीगताः सर्वेऽपि चिकित्सक-प्रवराः कामं तदुपद्रवोपचारात् पराजयेरँस्तथाप्येष योगनिद्रा-प्रयोगो ननु वक्तव्यं निसर्गस्यैतादृशं चित्तापहारि सान्निध्यं नैव तस्मात् पराजेष्यते । पराजितेष्वपि सुदुर्लभोपचारेष्वेष एव सर्वोत्तमः सर्वसुलभश्चोपचारो ह्यशान्त्युपहतचेतसां जनानां कृत इति वक्तुं युज्यते ।

अहं चक्षुषी निमील्य न्यषीदम् । नाऽतीतगतो विचारो न वर्तमानगतो नापि भविष्यद्गतः । सर्वथा निर्विचारं निर्विकल्पं च मनः । जगतीगताया नहि कस्या अपि भद्राया अभद्राया वा भावनायाः काऽप्यनुभूतिः । एकैवाऽनुभूतिरासीत्—तल्लीनताया उद्भूयमानस्य कस्याप्यनिर्वचनीयस्याऽऽनन्दस्य । कस्याऽपि

सूक्ष्मस्वरूपस्याऽऽनन्दस्य ।

अत्रान्तरे कुतश्चिदपि किमप्यलौकिकं मृदुमन्द्रस्वरोत्थं मधुरकण्ठगीतं समाकर्ण्यत—ध्याननिमग्नस्य विश्वामित्रस्य तपो भङ्क्तुमागतानामप्सरसां दिव्यसङ्गीतमिव ! अहं सपद्येव स्वचक्षुषी उदमीलयम् । चकितः सन् परितो दृष्टिमक्षिपम् । अभ्याशे कश्चनाऽपि नावालोक्यत तत्र । अहं गीतध्वनेर्दिशमवाधारयम् । यस्यां दिशि सा नदी प्रावहत् तस्या एव दिशः स गीतध्वनिरुदसर्पत् । अहमुत्थाय तस्यामेव दिशि प्रातिष्ठे । अनतिदूरमेव सा नदी दक्षिणाभिमुखं प्रावहत् । अहमपि तामन्वसरम् । अग्रे नदीतीरे बहवो विशालाः शाखिनस्तेषामधस्ताच्च नानाविधाः क्षुपा अविद्यन्त । तस्मात्कारणाद् नद्या उपर्युभाभ्यामपि तीराभ्यां वृक्षवनस्पतीनां गहना श्यामला च च्छाया प्रासरत् । अहं तस्यामेव च्छायायामग्रतः प्रासर्पम् ।

अविदूरमेवापश्यम् तत्रैकां देवकन्योपमां चिरण्टीम् । अहं यत्रासम् तत्रैव स्थगितः समजाये । सा मां पृष्ठतः कृत्वा स्थिताऽऽसीत् । नूतनं वासन्तीवर्णं परिधानम् । धम्मिल्लेष्वपि वासन्तीवर्णान्येव पुष्पाणि । सुस्निग्धा धम्मिल्लरचना । पृष्ठभागेनैव तस्या रूपरामणीयकस्यानुमानं सहजमेव कर्तुं शक्यते स्म ।

तत्किमपि कन्नडगीतमासीत् । किन्नरीगीतमिति कस्मान्न भण्येत ? सुस्पष्टमनाकलितायामपि गीतपङ्क्तौ, असञ्जातेऽप्यर्थावबोधे गीतमाधुर्यं खल्वहं समीचीनतयाऽऽकलयम् । गीतपङ्क्तिभिः सह वर्तमानो नादस्तेन सह वर्तमानाश्च स्वरोर्मयः श्रोतुर्जनस्य मनस्यपि तावद् ऊर्मीः प्रादुर्भावयन्ति । तदेव प्रकामं

भवति । गीतगता यथायथं का पङ्क्तयस्तासां पङ्क्तीनां कः पदार्थस्तस्मिश्च पदार्थे काव्यगुणो विराजते न वेत्येवमादिप्रपञ्चस्य नास्ति काऽप्यपेक्षा । ऋजुतया वक्रतया च सर्वत्र व्याप्यमानो नादः स्वात्मन्येव सङ्गीतस्य कृत्स्नमपि रसाविष्कारं समावेशयति । अर्थाऽवबोधो गुणीभूतः खलु । असञ्जातेऽप्यर्थावबोधे किं कोकिलस्य स्वरालापा हृदये रसं नैवाविष्कुर्वन्ति ? सायं समये पक्षिणां समूहाः स्वकीये ह्यावासवृक्षक उच्चैः सांराविणं कुर्वते । किं वयं तद्गतमर्थं बुध्यामहे ? परं तथापि किं वयं तद्गतं रसं नैवाऽनुभवामः ? रसानुभूत्यै मधुरः कण्ठस्तदुत्थीयमानश्च मधुरः स्वरसमूह एवालम् ।

अहं किञ्चिदन्तरे स्थितो निभृतः सन् तत्सङ्गीतमश्रृणवम् । तस्याः सङ्गीततन्द्रायां मा कश्चनान्तरायो भूदिति कृत्वा नाहं तस्याः समीपे गन्तुमुदसहे ।

परं कियत्कालमहं तत्रैवास्तम्भिष्यम् ? तस्मान्नद्यास्तीरे विद्यमानस्य सोच्छ्रायस्य स्थूलपरिणाहस्य चैकस्य पादपप्रकाण्डस्य पृष्ठतो निलीय न्यषीदम् । दिष्ट्या सुललितशष्पभूयिष्ठमासीत् तत्स्थानम् । अहं तत्रालुठम् । कञ्चित्कालं चक्षुषी न्यमीलयम् । कदा प्रमीला ममाक्षिणी अभ्यभवदिति नाहं वक्तुं प्रभवामि । अहमशयि ।

कियत्कालं तस्यामेवावस्थायामहमतिष्ठम् नैव वेद्मि ।

× ×

कश्चित् स्पर्श इव ।

अतिमात्रं कोमलः ।

अतिमात्रं स्निग्धः ।

मम मस्तके, मम मूर्धजेषु कासाञ्चित् कोमलकराङ्गुलीनां मनोमोहकः सञ्चारः ।

अन्वभवम् ता एव कराङ्गुल्यो मम पक्ष्मणोरुपरि समायाता इति । चुम्बकितः सन् शनकैरहं स्वचक्षुषी उदमीलयम् ।

"विकासमहाभाग, भवानत्र ? अस्या नद्यास्तीरे—शाद्वले ?"

"कः ?" अहं चकितचकितः सन्नुदतिष्ठम् । अवोचम् चापि—"कुसुमलक्ष्मि, त्वम् ? कञ्चन स्वप्नं तावन्नैव पश्याम्यहम् ?"

"नैव महाभाग, नैव पश्यति भवान् स्वप्नम् । न खल्विदं स्वप्नजगत् । अस्ति तावदिदं वस्तुजगदेव—सर्वथाऽनाध्यात्मिकमाधिभौतिकं जगत्—खरविशदम् ![1]" सरसस्निग्धाभ्यां लोचनाभ्यां मामभि सस्मितं पश्यन्ती साऽवदत् ।

"अये, किं तर्हि नद्यास्तीरे प्रवाहानुमुखं स्थित्वा त्वमेव तत्कन्नडगीतमगायः ?" अहं साश्चर्यं तामपृच्छम् ।

"बाढम् महाभाग, अहमेवागायम् ।" मम नेत्रयोः स्वकीये नेत्रे निपातयन्ती सा प्रत्यवोचत् ।

सर्वमेव विस्मयोत्पादकमभूत् । किमप्यघटितपूर्वमद्य घटत इति प्रत्यैयत । अहं तदेकदृष्ट्या तां पश्यँस्तथैव स्तब्धः समतिष्ठे ।

सा खल्वितोऽपि तथैव मनोमोहिन्यासीत् । तथैव तेजोमयी । तथैव नेत्राभिरामा । तथैव स्वास्थ्यशालिनी । तथैव चाकर्षण-

---

१. खरविशदम्='ठोस' इति भाषायाम् ।

गुणोपेता ।

"विकासमहाभाग, किञ्चिच्चकित इव मां पश्यति भवान् । कथमहमनया नाटकीयया रीत्याऽस्मिन्नुपह्वरे भवत्सकाशमुपागतेति किमाश्चर्यं कलयति भवान् ?"

"एतानि दिनानि प्रच्छन्नभूतया मम पृष्ठानुसरणं तु नैव विहितं त्वया ?" अहमपृच्छम् ।

"विहितमपि चेदनुचितं विहितं किम्मया ?" कुसुमलक्ष्मीः प्रत्यब्रवीत् ।

अन्तःकरणगतेभ्यः सुनिर्मलेभ्यो बलवद्भ्यश्च स्तरेभ्य उद्गम्यमानां तदीयामिमां वाणीमाकर्ण्य नाहं चिराय निश्चेष्टः स्थातुमशक्नवम् । सपद्येव कुसुमलक्ष्मीं स्वकीय उत्सङ्गे समाकृष्य स्ववक्षसा समासज्य चोपागूहम् ।

न सा मां प्रत्यरुणत् । सर्वथा निश्चेष्टा सती सा मदीयं दोर्बन्धनं प्रत्यपद्यत । एकस्मिन्नहनि खल्वहं तस्या उत्सङ्गे शिशुरिवात्मानं सम्पिण्ड्य प्रत्यपद्ये । अद्य खलु सा मदीयमुत्सङ्गे शिशुरिवात्मानं सम्पिण्ड्य प्रत्यपद्यत । मदभ्यन्तरो वात्सल्योत्सः समुदरिणक् । जगतीगतं सर्वश्रेष्ठं प्रयततमं वात्सल्यम् । अहं निर्निमेषाभ्यां लोचनाभ्यां तस्या मुखं न्यभालयम् । जगतः कियन्महनीयं द्रविणं ममोत्सङ्गे निपतितं वर्तत इति प्रत्यायमपि । ते लोचने, तेऽलकाः, तावधरौ, तयोर्मध्ये च परिद्रवत्तदुष्णोष्णं रवतचैतन्यम्—किमेतेषां सर्वेषामपि मूल्यं कश्चिच्छक्नोति निर्धारयितुम् ?

कियदन्तिकादहमेतत्सर्वमवालोकयम् ? श्वासोच्छ्वासवशात् तस्याः प्रसरतोः सङ्कुचतोश्च नासापुटयोरधऊर्ध्वीभावः, तस्याः

सुललितोत्तरौष्ठपट्टिकानिबन्धनमपूर्वं व्रश्चनं तक्षणं च, तत्र क्ष्टे द्वे मधुरे मांसरेखे, तयोर्मध्यगतः सम्मोहननिखातः, तत्रत्या खल्वतिसूक्ष्मा सूक्ष्मदृष्टिमात्रगोचरा रोमराजिः, तद्रोममूलेषु चोद्भिन्नाः सुकोमलास्तनवश्च स्वेदविन्दवः—कृत्स्नमप्येतत् सुसूक्ष्मरचनाजातं स्वकीयाभ्यामाभ्यामेव खल्वक्षिभ्यामपश्य-महम् । कीदृशं निर्विकारमासीत्तत्सौन्दर्यम् ?

अहं तस्या ओष्ठयोरुपरि स्वकीयावोष्ठौ न्यक्षिपम् । उद-तिष्ठम् चापि । साऽपि मयैव साकमुदतिष्ठत् । तस्या एकः करः खल्विदानीं मदीयं कटिप्रदेशमावेष्टयत्, मूर्धा मदीये स्कन्धे व्यश्राम्यद् अपरः करश्च मदीयमपरं स्कन्धमाश्रयत् ।

स्वकीयेनैकेन करेण तस्या मुखं चिबुके गृहीत्वा किञ्चि-दुदतोलयम् । ईषन्मुकुलितयोस्तस्या लोचनयोः स्वकीये लोचने निपात्य कञ्चित्कालं तथैवातिष्ठम् ।

तस्या लोचनाभ्यां मम लोचनयोर्मिलनसमकालमेव सा खल्वप्रत्याशितमुच्चैः क्रन्दस्फोटं प्रत्यपद्यत ।

"तस्मिन्नहनि सर्वथा नृशंसमानुष इव परित्यज्य मामेका-किनीं तथाकारं कस्माद्विनिष्पतितो भवान् ? किमप्यपराद्धमा-सीत्किम्मया ?" इत्युक्त्वा सा सफूत्कारं रोदितुमारेभे ।

"कियती व्याकुलीकृतचित्ताऽभवमेतावन्ति दिनानि भवन्तं विहायेति जानाति किम्भवान् ? पुरुषाणां जातिरेवंविधा निर्हृदया वज्रहृदया वा भवितुं शक्नोतीति नाहमजानाम् ।"

अश्रूणि खल्वितोऽपि निष्पत्य तदीयाभ्यां लोचनाभ्यां मम स्कन्धमौन्दन् ।

अहं सर्वथा निरुत्तर आसम् । तूष्णीमेवातिष्ठम् ।

अहं तस्या मूर्धानमुदहरम् । तस्याः स्थूलमांसलाभ्यां कपोलाभ्यां स्वकीयं कपोलमस्पर्शयम् । कञ्चित्कालं तदीयार्द्रं-कपोलयोः संस्पर्शस्यार्द्रललितमनुभवविशेषमरसयम् ।

"किम्भवान् सत्यमेव तावान् निर्हृदयः पाषाणहृदयश्च यत्कस्या अपि स्त्रियः सुकोमलं हृदयं निर्घृणमुन्माथयतो भवतोऽन्तरात्मा लेशमात्रमपि पीडां नानुभवति, किञ्चिन्मात्रमपि संकोचं न करोति, ईषन्मात्रमपि द्रवीभावं न प्रतिपद्यते ?" आवेशविशेषविवशेव साऽव्याहृतं व्याहरत् ।

एवं व्याहरन्ती सा किञ्चित्कालं तूष्णीं बभूव । स्रागिति मत्तोऽपससार । ततश्च स्वकीयाभ्यामुभाभ्यामपि हस्ताभ्यां मदीयावुभावपि स्कन्धौ धृत्वा प्रसभं मामामूलं विधुन्वती चीत्कारप्रायेण स्वरेणोपरुद्धकण्ठा सा प्रोवाच—"वदतु तावत्, निर्दिशतु तावद्, उत्तरतु तावत् किञ्चित् । कस्मान्मूक इव तिष्ठति भवान् ? किम्मया किमप्यपराद्धमासीद् यत्तदहनि तथाकारमप्रत्याशितं पर्यत्यजद् मां भवान् ?"

सा चिहुँत्कारमकरोत् । कियानिव लोकविलक्षण आसीत्त-दीयस्तात्कालिकोऽवतारः ! प्रेम्णः परा काष्ठा खल्वेकतः । क्रोधस्य परा काष्ठा खल्वपरतः । परस्परविरुद्धयोरेतयोर्भावयोरेव-ञ्जातीयका समुत्कटा संसृष्टिस्तस्या अन्तःकरणगतां निसर्ग-निर्मलोज्ज्वलां प्रीतिभावनामितोऽप्यधिकया समुज्ज्वलयाऽऽभया समगमयत् । बहुभ्यो दिवसेभ्यो व्यचिन्तयमहं किम्प्रयोजनं मनसा सम्प्रधार्य जगत्स्रष्टा क्रोधाख्यं तत्त्वं विनिर्ममे इति । परमद्याहं खल्वबुध्ये तद्रहस्यम् । व्यजानामहं क्रोधोऽपि समयविशेषमासाद्य मानवस्य महार्घमलङ्करणं भवितुमर्हतीति । धन्यः स जगत्स्रष्टा

यः खल्वेतत्कालिकं कुसुमलक्ष्मीगतं क्रोधमिममसृजत् ।

तस्या ललाटं, अश्रुवारिपूरिते अक्षिणी, वेपमानावोष्ठौ कम्पमानानि च सर्वाण्यपि गात्राणि सकृद्विलोक्यातीव शान्तेन वचसाऽहमवोचम्—"कुसुमलक्ष्म, अन्यदपि किञ्चिद्वक्तव्यमुर्वरितं स्यात्तर्हि तदपि ब्रूहि । प्रस्तुतोऽस्म्यहं श्रोतुम् ।"

एतच्छ्रवणसमनन्तरं मदीये वामस्कन्धे स्वकीयं कण्ठं निधाय बाहूभ्यामुभाभ्यामपि मामावेष्ट्य स्ववक्षसा संलगयन्ती सा कञ्चित्कालं निभृतमश्रूणि व्यसृजत् । तान्यश्रूणि मम पृष्ठभागमौन्दन् । कियन्त्युष्णोष्णान्यासँस्तान्यश्रूणि ? अन्तःकरणगताभिर्ज्वालाभिर्द्रवीभूतं तस्या हृत्पिण्डमेव नयनमार्गेण बहिर्निष्क्रम्य मम पृष्ठभागमुनत्तीति प्रत्यभात्तदानीम् ।

नाहं तां रुदतीं न्यवारयम् रोदनव्यापारात् । जागर्ति खलु ममायम्भावः कोऽपि प्रतिपीडितो रुदन् प्राणी नैव निवारयितव्यो रोदनव्यापाराद्; हृदयान्तर्गतान् सर्वविधानुद्गारान् बहिर्निर्गमयितुं सर्वाण्यपि द्वाराणि सर्वकालमपावृतानि कर्तव्यानि; यतो हीमान्यश्रूणि हृदयदेशे चिररात्राय सञ्चितस्य विषादस्य काञ्चिन्मात्रां स्वात्मनि घोलयित्वा बहिर्निर्गच्छन्ति, येन हि तस्य तपस्विनो दुःखनिबन्धनो दुर्वोढव्योऽपि भारः किञ्चिद् ऊनत्वं प्रतिपद्यते किञ्चैवं हृदयगते प्रभूते दुःखे व्यपगते सति स प्रतिपीडितो जन्तुर्भूयानिवोपकृतो भवतीति ।

कञ्चित्कालं सा मम स्कन्धभागमाश्रित्य तूष्णीं रुदत्यतिष्ठत् । अहमालोचयामि कियती खलु भाग्यशालिन्यासीत्सा ! एवङ्गुणविशिष्टं रुदितमपि कमुपलभ्यते जगत्येतस्मिन् ? शान्तिमुपगते किञ्चित्तस्याश्चित्ते सा स्वकीयं मूर्धानमुद्धृत्य मम

स्कन्धभागाद् मां सानुनयमपृच्छत्—"महाभाग, किमिदानीं व्यवस्यति भवान्प्रतिपत्तुम् ?"

"जानात्येवात्रभवतो पथिकः खल्वस्म्यहम्; परदेशवास्तव्यः खल्वस्म्यहम्; संन्यस्तसर्वक्रियः खल्वस्म्यहमिति । कश्चेदानीं मज्जातीयकस्य भवितुमर्हति व्यवसायः ? परिस्थितयो यमपि व्यवसायं यदृच्छया निर्धारयेयुः, स एव मदीयो व्यवसायः । नास्ति ततोऽधिकं किञ्चिदपि ।" अहं प्रत्यवोचम् ।

"साधु तर्हि । आगच्छतु भवान् । नदीतीरं यावः ।"

आवां वृषभावत्यास्तां सुकुमारां जलधारां प्रत्यगच्छाव । सा जलधारा खल्वितोऽपि तथैव—पूर्वोक्तेनैव प्रकारेण गायन्ती काियन्ती च प्रावहत् । कुसुमलक्ष्मीः स्वकीयं मुखमक्षालयत् । अहमपि चुलुकेनाम्भः किञ्चिदपिबम् । उद्वेगश्चित्तगतः सर्वोऽप्यपायात् ।

अहं कुसुमलक्ष्मीं दृष्ट्वा किञ्चिद्दौर्जन्योपेतेन कण्ठेनाकथयम्—"कुसुमलक्ष्मि, यदि नाटके कस्मिँश्चिदपि भूमिकां गृह्णीयास्तर्हि मन्ये साफल्यमतिमात्रं त्वमाप्नुयाः । अभिनयं खल्वपि त्वं क्षमसे शोभनं कर्तुम् ।"

"अथ भवान् ?"

सा प्रथमतोऽहसत् । अश्रुवारिणा तदीये चक्षुषी सम्यक् प्रक्षाल्य स्वच्छतामानीयेताम् । नदीवारिणा चापि तस्या मुखं प्रक्षाल्य तत्रापूर्वः कश्चन नूतनः प्रकाशः प्रासार्यत । एवङ्कारं क्षालितयोस्तयोस्तस्याश्चक्षुषोस्तादृशो हासः खल्वापूरितोऽभवत् । हासः खल्वपि स प्रक्षालितः सन्नूतनः सञ्जात आसीत् । तथाजातीयकयोस्तयोश्चक्षुषोस्तथाजातीयको हासः !! हन्त,

कीदृशमवर्णनीयमाकर्षणमासीत् कुसुमलक्ष्म्यास्तयोरद्यतनयोश्चक्षुषोः ! रोदनोत्तरकालं चक्षुषोर्मध्ये यद्धसितमागत्य तिष्ठति तद्व्यतिरिक्तमन्यत्किमपि स्त्रीजीवितगतं वस्तु मनोहरतरम् भवितुमर्हति किम् ?

अहम्भूयोऽपि कुसुमलक्ष्मीं स्ववक्षसा समासज्योपागूहम्। तस्या श्रोष्ठयोः समीपं स्वकीयावोष्ठौ नीत्वाऽहमवोचम्—"अभिनयकर्मण्यपि नदीष्णा प्रतीयसे कुसुमलक्ष्मि ! अद्यतनस्त्वदीयः खल्वभिनयश्चिरं स्थास्यत्यविमार्जितो मदीये स्मृतिपटले ।"

"अपि भवाँस्तमभिनयं प्राह ? "

"किमन्यत्तर्हि मया वक्तव्यं कुसुमलक्ष्मि ?"

"अभिनयस्तावत्कयाऽपि रीत्याऽऽहूतानाम्भावानामभिव्यक्तिर्निगद्यते ।"

"किञ्चातः ?"

"यथार्थाऽपि मदीया भावाभिव्यक्तिरयथार्था खल्वापद्येत। नास्ति तावन्मदीयाऽयथार्था भावाभिव्यक्तिः । किमितोऽपि नैवाऽबुध्यत भवानहं यथार्थतो भवदीयाऽऽराधिकाऽस्मीति ?"

"परं कियताऽल्पकालेनाऽजायत खल्वेषा प्रखरा भावबन्धप्रतिपत्तिः ? नैतत्सर्वमभिनयपदवाच्यं भवति तर्हि किं कस्या अप्यनादिशक्तेरविज्ञाता प्रेरणा भवति ?"

"अहं ब्रवीमि नाहं प्रष्टव्या भवामि प्रश्नमिमम् । भवदीयः खल्वात्मा प्रष्टव्यः ।"

"मा मैवं कुसुमलक्ष्मि ! इमं प्रश्नं त्वया त्वदीय आत्मैव

प्रष्टव्यः ।" अहं छन्दस्यं[1] दौर्जन्यं प्राक्रमे । छन्दस्यमेव गाम्भीर्यारोपणमात्मनि कर्तुं प्राक्रमे ।

"कुत एतत् ?"

"कुत इति पृच्छसि ? ब्रवीमि तावच्छृणु । अस्यां नवयौवनोदयवेलायां शारीरिकाणां, बाह्यानां किञ्च पार्थिवस्वरूपाणां वासनानामुन्मेषो हृदयान्तर्वर्तिनो निष्कलुषान् भावान् कञ्चित्कालं समावृणुते । तस्मादेव को यथार्थो भावः कश्चाऽऽहूत इति विवेको दुष्करो भवति । त्वं स्वयमात्मानं पृच्छ बाह्या वासनास्तु त्वां नैवं विह्वलयन्तीति । कस्मादहमेतत्सर्वं भणामि तदपि शृणु । वासनोद्रेकप्रयोजितः प्रणयव्यवहारः क्षणमात्रमेव जीवति । सञ्जातायां नाम वासनापूर्त्यां तत्क्षणमेष सर्वोऽपि प्रणयो विलुप्यते । किञ्च पूर्वं तीव्राकर्षणस्य भाजनं त्वरितमेव तत उत्तरकालं विरक्तेर्भाजनं भवति ।

यद्धि यथार्थं भावबन्धस्य स्वरूपं, नैव सम्भवति तस्य साक्षात्कारस्तावताऽल्पीयसा कालेन । यदपि तावता कालेन सम्भवति, तद् भवति यथार्थस्य भावबन्धस्याभिनयमात्रम् ; न पुनः परमार्थतो भावबन्धः । अत एवाहं ब्रवीमि 'नदीष्णाऽस्यभिनयकर्मणी'ति ।"

अहो नु खलु भोः, कस्य प्रसङ्गस्य केन प्रसङ्गेनाऽभिसम्बन्धः ? किमुपक्रान्तं किं चोपसंहृतम् ? ननु वक्तव्यम्— 'विनायकं प्रकुर्वाणो रचयामास वानरमि'ति ।

नूनं प्रज्वलत्खदिराङ्गारमयाण्यासन् मत्प्रणीतानि वचांसी-

---

१. छन्दसा निर्मितं छन्दस्यम् । इच्छापर्यायश्छन्दःशब्द इह गृह्यते । 'जान-बूझकर किया गया' इति भाषायाम् ।

इति सूत्रेण निमूलम् समूलमोरुपपदयो रेव तद्विशेषः।

मानि । तथापि सर्वथाऽविचलितचित्ता साऽब्रवीत्—"एतेनैत-दुक्तं भवति यद् भवान् मद्भावबन्धपारमार्थ्यं सर्वथा निकषो-पलकाषं कषितुं कामयते । तथास्तु । अहं प्रस्तुताऽस्मि ।"

एतदाकर्ण्य तत्कालं मदीयं कृतकं दौर्जन्यं व्यपालीयत । अद्रवद् हृदयम् । निष्कारणमेव तथाविधानि प्रौढिपरिवृढानि वचांस्युपयोज्य निष्ठुरमाघातितवानस्मि तदीयं सुकुमारं हृदय-मित्यन्वभूयत ।

कुसुमलक्ष्मीमितोऽप्युद्गाढं स्ववक्षसा समासञ्जयन्नहमवो-चम्—"कियन्तमलौकिकं मन्त्रमोहं जनयसि त्वं कुसुमलक्ष्मि ! कीदृशी मधुरा ते वाणी ! नूनं पुरुषजातिरतीव निर्हृदयाऽतीव च वज्रहृदया भवति । मदीयमेतं निर्हृदयं व्यापारं क्षन्तुमर्हसि किम् ?"

"क्षमायाचनया नायं जनो लज्जयितव्यः । व्यजानाद् भवान् मम वचसां पारमार्थ्यमित्येतदेव पुष्कलं भवति । कृतार्थां खल्वहमिदानीमात्मानं मन्ये ।"

एवं वार्तालापपरयोरेवावयोः कश्चन कृतकाषायवस्त्र-परिधानः परमतेजस्वी संन्यासिमहानुभावस्तत्रोपायात् । कुसुमलक्ष्मीः स्रागित्यात्मानं मम बाहुपाशादुन्मोच्य पृथगभवत् । ससाध्वसा चेषन्मलिनमुखमण्डला समजायत ।

स महानुभावः खल्वांवयोः समीपमागच्छत् । अभूतपूर्व-स्मितोपेताभ्यां लोचनाभ्यामावाम्प्रत्यपश्यत् । कुसुमलक्ष्मी-मुपगम्य सस्नेहं पाणिना तदीयं मूर्धानं परामृशन् स प्रावोचत्—"वत्से, इतोऽप्यत्रैव वर्तसे त्वम् ? अशनाया नैव बाधते किन्त्वाम् ?"

"तात, प्रथमन्तावदेनं महाभागं परिचिनु। एष हि नाम्ना विकासः। अपरेद्युरस्यैव नामाहं समशब्दयम्। अयमेव तस्मिन्नहनि प्राघुणिकभावेन ममावसथमाजगाम।"

अहं तमपश्यम्। तदीये मुखमण्डले विराजमाना चिरन्तनी प्रसन्नता ह्यदम्यं च तेजो मामपरिचितमपि द्रागेव स्वपरिचय-स्नेहपाशेन दृढमापाशयेताम्।

"एवं खलु तत्। भवानेव तर्हि विकासनामा? वत्सा भृशं संशब्दयति भवन्तम्। श्रीधरेण सह ह्यो भवानेवाऽस्मदीय-माश्रममुपायात्। नैव किम्? एष हि परमसन्तोषस्य विषयः। भवतु। इदानीं भवान् आश्रमं यातु। आप्रभाताद् गवेषयन्ति ते भवन्तम्। भवदीये कक्षे भोजनमपि परिवेषितं तिष्ठति। अनुष्णे सञ्जाते भोजने खल्वस्मदीयमाश्रमं वचनीयतां नेष्यति भवानेव।" इत्युक्त्वा स व्यहसत्। ततः साभिप्रायया दृष्ट्या वीक्षमाणः कुसुमलक्ष्मीमवोचच्चापि—"वत्से, प्रापयैनं महा-भागमाश्रमम्। भोजय च। अथ शृणु। कार्यवशादहं प्रतिवेश-स्थान् काँश्चित्संवसथान् गच्छामि। अद्य नाहं न्यवर्ते तर्हि मा कार्षीर्मार्गप्रतीक्षाम्। श्वो वा परश्वो वाऽहं प्रत्यावर्तिष्ये।"

"बाढम्। प्रापयाम्यहमेनं महाभागमाश्रमपदम्।"

स संन्यासिमहाभागो नदीमुत्क्रम्य प्रायात्।

स एवाऽस्य वैदिकब्रह्मचर्याश्रमस्याधिपतिः कुसुमलक्ष्म्याश्च तातपादः।

## षष्ठः समुच्छ्वासः ।

आवयोराह्लादस्य खल्वियत्ता नासीत् । सर्वथा विस्रब्धावावां परस्परमालपन्तावगच्छाव । यस्मिन्दिनेऽहं विश्वेश्वरपुरनगरयानप्रस्थानके कुसुमलक्ष्मीं नगरयानमारोह्य स्वयं वेदधर्मप्रसाराश्रमं प्रति निरगच्छम्, तद्दिनादारभ्येदानीं यावत् समग्रमपि तस्या वृत्तान्तजातं सा मह्यं न्यवेदयत् ।

साऽकथयत्—"स्वप्नेऽपि नाऽहमवाकल्पयम् एवमावां वियोक्ष्यावह इति । नगरयानप्रस्थानसमये भवन्तम् अधः स्थितमेव दृष्ट्वा चकम्पे मम हृदयम् । उद्विविजे चाहं सर्वथा तत्क्षणम् । नगरयाने जनसम्मर्दो महानासीत् । तस्मान्नाहं शशाक तत्राऽवतरीतुम् । अग्रिमे प्रस्थानके यानादवतीर्य प्रतिनिववृते । प्रतिनिवृत्य पूर्वतने यानप्रस्थानके नाहं भवन्तमितस्ततो ददर्श । गवेषयाञ्चक्रे । न भवानलभ्यत । हृदयं नैराश्यग्रस्तं समजायत । भवान् वेदधर्मप्रसाराश्रमं गतो भवेदित्यालोच्य तत्रापि जगाम । अन्तर्बहिश्च सर्वत्र गवेषयाञ्चक्रे । न भवाँस्तत्र क्वाप्यवालोक्यत । गवेषं गवेषं क्लान्ता निराशा च स्वावसथमेवाहं समाजगाम । मम हृदयं विषण्णमासीत् । नाहं सुखं संवेष्टुं शशाक । अव्याहतं भवद्विषय एव व्यचिन्तयम् । कथमपि भवान् ममावसथं सम्प्राप्नुयात्तद्रात्राविति भूयो भूयो भगवन्तं ययाचे । कस्यापि चरणसम्पातध्वनिं श्रुत्वा भवानेवाऽऽगच्छज्जात्विति विभावयाञ्चक्रे ।

द्वारमुद्घाटय भवन्तमसम्प्राप्तं दृष्ट्वा भृशं चिक्लिशे। यथा यथा रात्रिर्व्यत्ययात् तथा तथा ममाशाबन्धोऽपि व्यत्ययात्। नैराश्यमवर्धत। अहं स्वोपस्तरणपतिता सुचिरमितस्ततः पार्श्वोपपीडं व्यलुठम्। न जाने कुत्र भवाँस्तिष्ठति, का भवतो दशा, भवानभुङ्क्त न वा, कुत्र भवानभवत्, कुत्राशेत, किम्भवतः समजायतेत्येवञ्जातीयकाभिर्नानाविधाभिर्दुःशङ्काभिर्व्याप्नोद् मे मनः। मदीयमेकं मनो मामकथयत् छन्दत एव—स्वमनःप्रेरणयैव नैव भवानायाद् मया सहेति। जातु किमप्यपाराध्यमहं भवतो येन भवतो हृदयमाघातमिवान्वभवत् किञ्च भवान् मम साङ्गत्यपरित्याग एव श्रेयान् इति मत्वा तथा प्रपलायितः। परं किं मया तादृशं समाचरितम्? न किञ्चित्कटु व्याहृतम्, न च किमप्यशिष्टं व्यवहृतम्। किं तर्हि मया तादृशं समाचरितं, येन भवतो विप्रियं प्रत्यपद्यत? अथवा किं मदीयं रूपं, मदीयं यौवनं नारोचत यद्वा मम चारित्र्यविषये कश्चन सन्देहः प्रादुरभवत्। इदमपि चिन्तितं भवेद् भवता एकाकिन्यहं, नवयौवना च; तस्माद्रात्रौ तत्र शयनं ममावसथप्रतिवेशिनां मनसि कामपि खल्वनीप्सितां शङ्कामुत्पादयिष्यतीति। भवतु। अहं तथा सुचिरं भवद्विषये चिन्तयामास यथा मम मनः सर्वथा भवत्येवैकतानं समजायत। आप्रभातात् सायङ्कालं यावत् तस्मिन्नहनि यदपि घटितं तत्सर्वं मया मनस्येव समालोचितम्। यत्किञ्चिद् भवानवदद् अकरोच्च; किञ्च यत्किञ्चिदहमवदम् अकरवम् च, तत्सर्वमेकैकशो मम चक्षुषोः पुरतः समुपातिष्ठत। भवदीयं रूपादिकं, देहबन्धादिकं, व्यवहारादिकं, व्याहारादिकं, सँल्लापादिकं, स्मितहसितादिकं, गतविहृतादिकं, वेशभूषादिकं—सर्वं सर्वं मम स्मृतिपटले पुनरा-

विरभवत्। अनुत्तममूल्यं रत्नमेकं भवान् वर्तते, भवतः प्रणाशनं महतो दौर्भाग्यस्य विषयो भवेदिति मनसा निरधारयमहम्। अभिसन्धिसहस्रसङ्कुले खल्वेतस्मिञ्जगति भवज्जातीयको निश्छलो निष्कपटश्च जनः सर्वथा दुर्लभः। क्वापि श्रुतमासीद् मानवीये खल्वायुषि त्रिकृत्वः परमेश्वरो ह्येककृत्वश्च स्पर्शमणि-रासादितो भवतीति। परं न पुनर्मानवस्तं शक्नोति प्रत्यभि-ज्ञातुम्। एवं खलु करतलगतमपि तदभीष्टतमं वस्तु नश्यति। भवच्चिन्तनसमकालं लोकोक्तिरियं मम स्मृतिपथमुपायात्। एतेन खल्वितोऽपि व्याकुलितहृदया समजाये। नाहं चिरमात्मानं प्राभवम् नियन्तुम्। उदतिष्ठम्। बही राजमार्गं व्यलोकयम्। अन्तरेण विद्युद्दीपप्रकाशं नान्यत्किमपि प्रकाशमयं व्यलोक्यत। सर्वत्राप्यन्धकार एवाऽऽसीत्। मम नेत्रयोः पुरस्तादपि खल्वन्ध-कारः प्रसर्तुमारेभे। विभीषणदुःस्वप्नमयीव प्रत्यैयत सा रात्रिः। पुनरप्यहं स्वकीयमुपस्तरणं प्रत्यायासम्। किञ्च नाहं शशाक तमुपस्तरणं विलोक्य मदीयं चित्तं मदायत्तं स्थापयितुम्। अवाङ्मुखं निपत्योपस्तरणे व्यचिन्तयम् अद्य रात्रौ भवान्मदीय आवसथ उपास्थास्यत चेत्…। एतेन खलु विचिन्तनेन दुश्चि-कित्स्यः समजायत मे मनोव्याधिः। नाहमश्रुप्रवाहं निवारयितुं शशाक। किञ्च सफूत्कारमहं क्रन्दितुमारेभे। अश्रुवारिणा कृत्स्नमपि मम तूलोपधानं क्लिन्नं समजायत। किञ्चेदानीं मुक्तकण्ठं क्रन्दनमपि नासीच्छक्यं मम। निशीथगतायां सर्वथा स्वनशून्यायां वेलायां मदीयं क्रन्दनारावं श्रुत्वा प्रतिबुद्धाः प्रतिवेशवासिनो मां क्रन्दनहेतुमप्रक्ष्यँश्चेत् किमहं प्रत्यवक्ष्यम्? तस्मात्सिसत्कारमेवावालम्बे। नैव जाने कदा खल्वेतस्याम-

वस्थायां प्रमीला मामभ्यभवत्। प्रमीलितलोचना चाहं मधुरमेकं स्वप्नं खल्वद्राक्षम्। भवान्ममैवावसथे वर्तते किञ्च भवदुत्सङ्ग-निपतितां मां स्ववक्षसा सङ्गमय्य तथैव स्वबाहुभ्यां मामावेष्टयद् यथा खल्वद्य भवानकरोत्।

"अहं कियदभ्यलष्यम् एष स्वप्नस्तथैव सर्वकालमविघ्नितं स्थेयात् किञ्चैतस्यामेव स्वप्नावस्थायां मम जीवनस्योर्वरिताः सर्वेऽपि क्षणा व्यतीयासुरिति। परं प्रत्यूषे यदा निद्राच्छेदः प्रतिपन्नस्तदाऽपश्यम् अहं सर्वामपि रात्रिम् अत्रोपस्तरण एवमेव निपत्यासीति। यदाहं भवदभावं भवदुत्सङ्गाभावं चापश्यम्, तदा या ममावस्था सञ्जाता सा नूनमशक्यवर्णना। अतीव विषण्ण-चित्ता समुत्थाय यथा कथमपि गृहगतं कार्यजातं निरवर्तयम् किञ्च विमनायमाना रात्रिगतं स्वप्नमचिन्तयम्।

"किञ्चित्कालानन्तरं मम पितृपादः समागच्छत्। तं विलोक्य चित्तं किञ्चिच्छान्ततामभजत। अहं प्राणमम् तम्। मम मुखं निर्वर्ण्य मदीयमौदास्यमनुक्तमप्यौहत। अनेकाः प्रश्नाः कृताः। केङ्गेरिं प्रति चलनस्यापि खल्वाग्रहो विहितः। परं नाहं तमाग्रहमन्वमन्ये। अहमवोचम्—'इदानीं तु सर्वमनवद्यं वर्तते। यस्मिन्नहनि सम्भविष्यति मनोऽभिलाषः स्वयमेव समायास्यामि।

"स्वयं पितृपादोऽपि महतीमन्यमनस्कतां भजते। मम जनन्यां तस्याऽऽसीत्सुमहाननुरागः। अहं तस्य खल्वेकलकैवास्मि कन्या। एभ्य एकोनविंशतिभ्यो वर्षेभ्योऽतीव स्नेहेन स मां परिपालयामास। दिवं गतायां मम जनन्यां स तथा मानसिक-माघातमन्वभवद् यथा गृहस्थभावं परित्यज्य स संन्यासमेवाङ्गी-

चकार। एष ब्रह्मचर्याश्रमस्तेनैव स्थापितः। एतादृशि लोकसंग्रह-कर्मणि व्यापृतस्य चित्तौदास्यं किञ्चिदपयास्यतीत्येवमसौ मनसा करोति। अहं तस्य बेंगलूरनगरवर्तिनि खल्वावसथे निवसामि। मम पितृपादः प्रत्यहं नियमेन ममावसथं समायाति। एककालिकं भोजनं तत्रैव स्वीकरोति। मह्यं तावद् बेंगलूरनगरनिवास एव रोचते। नात्र ममागमनं प्रायिकम्। परमस्मिन्नवसरे भवतो निर्गमनानन्तरमतिमात्रमौदास्येन निर्भिन्नं मे चेतः। तस्मादे-वाहमत्राजगाम।"

अहं तस्येमां कथां श्रुत्वा मदीयमप्येतावत्कालिकं कृत्स्नमप्यु-दन्तं तस्यै न्यवेदयम्।

ममोदन्तमाकर्ण्य सा भृशं पीडिताऽभवत्। अश्रुभिराकुली-कृतलोचना साऽब्रवीत्—"नाहं भवत आहाराभ्यवहारादिकस्य भारं वोढुं शक्ष्यामि किञ्च भवदीयं ममावसथे स्थानं मदर्थम-वोढव्यो भारः सञ्जनिष्यत इति समदिग्ध भवान्? ब्रह्मन् विकासमहाभाग, नाहमनृतं वच्मि। अस्माकं गेहे कस्यापि वस्तुनः कीदृशमपि नैयून्यं नास्ति। परमेश्वरप्रदत्तं सर्वं विद्यते। भवादृशाः प्राघुणिकाः कृत्स्नमपि जीवितं तत्र तिष्ठेयुश्चेद् न वयं परमेश्वरकृपया लेशमात्रमपि क्लेशं भोत्स्यामहे। हन्त, निष्कारणमेव बुभुक्षयाऽपीड्यत भवान्।"

ब्रह्मचर्याश्रमस्यान्तिकमागच्छावेदानीमित्यवधार्य कुसुम-लक्ष्मीमहमवोचम्—"अवशिष्टाः कथाः पुनर्भविष्यन्ति। अथे-दानीं किञ्चिद् भोजनस्याऽपि चिन्तां वहेव।"

"हन्त, भोजनस्य चिन्ता भवदीया!" एतदुक्त्वा सोच्चै-रहसत्। "भवाँस्तु बहुशोभनां वहति भोजनचिन्ताम्!"

अहमप्युच्चैरहसम् ।

एष आश्रमः पर्याप्तं विस्तीर्णो वर्तते । छात्राणां वसतिस्थानं, विद्यानिलयस्थानं, भोजनस्थानम्, अध्यापकानां वसतिस्थानं, भृत्यानां वसतिस्थानमित्येवमादीनि स्थानानि परस्परं पर्याप्तं विप्रकृष्टानि सन्ति। इदमेव कारणं यद् एकस्मिन्नेवाऽऽश्रमे निवसन्नपि ह्यो नाहं कुसुमलक्ष्मीमपश्यम्। सा स्वकीयपितृपादस्य निवासस्थान आसीद् अहं च श्रीधरमहाभागस्य । इमे उभे अपि स्थाने परस्परं पर्याप्तं विप्रकृष्टे स्तः ।

तस्मादादावावां तत्रागच्छाव, यत्राहमतिष्ठम् । तत्रैकस्मिन् लघुस्तम्भफलके मदर्थं भोजनमेकस्यां स्थालिकायामाच्छाद्य स्थापितमासीत् । कुसुमलक्ष्मीरग्रतः प्रसर्प्य स्थालिकात आच्छादनमपासारयत् । मां भोजनार्थमुपवेशयन्ती साऽब्रवीत्—"मन्ये नेदं भोजनमपर्याप्तं भविष्यति । अपर्याप्तं भवेच्चेद् नैव सङ्कोचो विधातव्यः । इतोऽपि भोजनमागमिष्यति ।"

"हन्त भोः, इदं भोजनं किं भवती खल्वेकस्य जनस्येत्याह ? त्रयोऽपि जना जेमनार्थमुपविशेयुर्नैवाऽपर्याप्तं भविष्यतीत्यहं मन्ये ।" अहमवोचम् ।

"किं ब्रूते भवानपि ? भवतो देशे किं तावन्मात्रं न्यूनं भोजनं कुर्वन्ति जनाः ? नैतदहं विश्वसिमि । बाढम् । श्रूयताम् । इदानीं निश्चिन्तेन मनसा भोजनं क्रियताम् । तदनन्तरं किञ्चिद्विश्रान्तिसुखमनुभूयताम्। सर्वथा ब्रह्मकषायग्रहणवेलायामहमत्र समायास्यामि ।"

एतदुक्त्वा निरगच्छत् सा । अहमपि निर्वर्तितभोजनक्रियः, प्रक्षालितहस्तः पार्श्वनिहितान् मैसूरगुवाकच्छेदांस्त्रिचतुरानादाय

मुखे न्यास्यम् । हस्तेनैकेन तुन्दं परिमृजन् यज्ञोपवीतं च खेलयन् एकस्यामारामोपवेशन्यामुपविश्य समीपस्थमेकं दैनिकं कन्नड-समाचारपत्रमादाय तद्वाचयितुं प्राक्रमे ।

## सप्तमः समुच्छ्वासः ।

समाचारपत्रं पठतो मे न जाने कदा प्रमीलिकयाऽऽक्षिप्ते लोचने । हस्तेन धृतं समाचारपत्रं हस्तान्निर्गलितं सद् भूमौ न्यपतत् । विलक्षणामेव स्वप्नावस्थामन्वभवम् । स्वप्नाभ्यन्तर एव प्रत्यायम् यद् भूमिकम्प इव भासते; भूमिर्दोलायते; सर्वाऽपि कुटी दोलायते; यस्यामुपवेशन्यामहं विश्रामार्थी समुपाविशम्, सा दोलायते; पार्श्वस्था शिविरखट्वा दोलायते; किञ्चैवमभासत यदभ्यन्तरादर्गलिते द्वारकपाटे तीव्रतया दोलायेते तदुत्पन्नश्च श्रुतिगोचरो भवति भीषणो धडधडात्कारध्वनिः । ससम्भ्रमम-हमुदतिष्ठम् । उत्थाय पश्यामि ह्यन्यत्तु सर्वं यथास्थानं समी-चीनतया व्यवतिष्ठते; परं कपाटे नाम यत्सत्यं धडधडायेते इति । बहिर्भागात् कश्चन रंहसा ते प्रेलयति । अहमितोऽपि सम्यक्तया चैतन्यावस्थायां नागच्छम् स्म; बहिर्भागात् कस्यापि खल्वाका-रणाध्वनिः समश्रूयत—"अयि भोः महाराज, कपाटे अपावृणु-ताम् ।"

इयं कुसुमलक्ष्मीरेवाऽऽसीत् ।

"वरम् वरम् । एष अपावृण्वे ।" इत्युक्त्वाऽहम् कपाटे

अपावृण्वि । सा स्मयमाना कुट्यभ्यन्तरे प्राविशत् । अत्यन्तं विनोदोपेतेन स्वरेण साऽब्रवीत्—"कीदृशी कुम्भकर्णस्य निद्रा वर्तते भावत्की ! कापि वेला मम कपाटोद्घाटनार्थं प्रयतमानायाः। निद्रैव भावत्की नोच्छिद्यते ।"

"किञ्च कीदृशं राक्षसजनोचितं रंहो वर्तते त्वदीयमपि ! सधडात्कारं कपाटप्रेलनं त्वदीयं भूमिकम्पस्याभासं जनयति स्म। अहं तावदबिभयमिव ।" अहं प्रत्यवोचम् ।

"वरम् वरम् ।" ब्रुवती सा स्वकीयं शिरस्तथा व्यचालयद् यथा तस्याः पृष्ठभागे लम्बिता वेणी दक्षिणस्कन्धोपरिष्टात् तदीयं वक्षःस्थलमाललम्बे । सा सविनोदं किञ्च सस्वाम्यं मामादिदेश —"गच्छतु । प्रथमं मुखादिकं स्वकीयं क्षालयित्वा समागच्छतु ।"

यावदहं मुखं क्षालयित्वा न्यवर्ते, तावत्सा तैलज्वालायन्त्रमपि प्रावर्तयत् किञ्च ब्रह्मकषायपुटग्रीवमपि[1] तदुपरि न्यास्यत् ।

सा मामपृच्छत्—"किं भवते रोचते—ब्रह्मकषायो वा कामरूपिकाकषायो वा ?"

कञ्चित्कालमहम् अनिर्णयावस्थायां मौनमाश्रित्य समतिष्ठे । तदनन्तरमहमवोचम्—"किं रोचते मह्यमिति किं निर्दिशानि ? उभयमपि रोचत इति सुवचं स्यात् ।"

"इतोऽप्येतदेव नैव जानाति भवान् सम्यक् किं वा रोचते भवते किं वा नैव रोचत इति । परमेश्वरो वेत्ति भवते खल्वहमपि रोचिष्ये नवेति ।" मम चक्षुषोर्निक्षिप्य स्वकीये चक्षुषी सस्मितं सा न्यगदत् ।

---

१. पुटग्रीवः=भाजनम् । 'Pot' इत्यांग्लभाषायाम् ।

कञ्चित्कालमहमहसम् । परस्ताच्च तामहमपृच्छम्—"वरं तुभ्यं किं रोचते ?"

"मह्यं तावद् ब्रह्मकषाय एव रोचते ।"

"परं मह्यं स कटुः प्रतीयते ।"

"अयि महाभाग, स एव तावद् यथार्थः कषायस्यास्वादः ! तदभावे किं ब्रह्मकषायेण ?"

"ब्रह्मकषायस्य विषये त्वदीयमेतदुक्तं तद्विधमेव प्रतिभाति, यद्विधं मेथिकामोदकानां विषये गुर्जरराष्ट्रीयानामुक्तं श्रूयते। अस्माकं छात्रदशायाम् अस्माभिः साकं गुर्जरराष्ट्रीयाः खल्वपि केचन च्छात्राः पठन्ति स्म । एकदा च्छात्रः खल्वेको दीर्घावकाश-दिवसेषु स्वगृहं गत्वा प्रभूतान् मेथिकामोदकानादाय प्रत्यावर्तत। तान् मोदकानसौ खल्वस्मभ्यपि व्यश्राणयत् । अस्माभिः स्वजिह्वायां स्थापिते तस्मिन् मोदके सपद्येव सर्वाऽपि जिह्वा कट्वी समजायत । वयं तु तान् मोदकान् तत्कालमेवाऽपास्याम। परं स च्छात्रोऽस्माकं पश्यतामेव खल्वनेकान् मेथिकामोदकान् स्वजठरगह्वरेऽवातारयत् । यदा वयमपृच्छाम 'किं भोः, मोदका-नामेषां कटुत्वं नैव बाधते किं त्वाम् ?' इति, तदा खल्वसावपि त्वद्विधमेवोदतरत्—'स एव तावद् यथार्थो मेथिकामोदकाना-मास्वादः । तदभावे किं मेथिकामोदकैरि'ति ।"

एतच्छ्रुत्वा साऽहसत् । अब्रवीच्चापि—"इतोऽपि ब्रह्म-कषायो नैवाऽऽस्वादितो भवतेति प्रतीयते । द्वावपि दिवसौ यदि ब्रह्मकषायं मद्विनिर्मितमास्वादयिष्यति, तर्हि कामरूपिकाकषायं-वामरूपिकाकषायं सर्वमपीमं सपद्येव विस्मरिष्यति भवान् ।"

अहमहसमेव केवलम् ।

ब्रह्मकषायो निरपाद्यत। वर्धमानक उम्भित्वा सा तं मम सम्मुखस्थे लघुस्तम्भफलके स्थापयामास। अस्मिन्नेवान्तरे विद्याधरमहाभागस्तत्र समागच्छत्। कुसुमलक्ष्मीं तत्रावलोक्याऽवश्यं किञ्चिदाश्चर्यं सोऽन्वभवत्। परं नासौ तदभिव्यानक्। स कुसुमलक्ष्मीमेतावदेवाऽपृच्छत्—"किं वत्से, विकासमहाभागं ब्रह्मकषायेणोपचरसि ?"

"बाढम्। पितृव्यपाद !" कुसुमलक्ष्मीः प्रत्यब्रवीत्।

"कषायः खल्वेष कटुर्भवेत्। यथाहं ब्रवीमि तथा विधेहि। तत्र कपाटिकायाम् एला जातीफलं च निहितानि सन्ति। तानि क्षोदयित्वा किञ्चिन्मात्रायामस्मिन्कषाये निक्षिप। अस्माभिर्महाराष्ट्रीयाभ्यागतानां रुचेरपि विचारः कर्तव्यो न वा ?" विद्याधरमहाभागोऽब्रवीत्।

कुसुमलक्ष्मीर्मां व्यलोकयत्। चक्षुषोरभ्यन्तर एवास्मयत। तदा विद्याधरमहाभागं प्रत्यवलोक्याब्रवीत्—"साधु तावत्। इदानीमेव विदधामि। भवानपि ग्रहीष्यति न वा ?"

"अहं ब्रह्मकषायं गृहीत्वैव निष्पतितोऽस्मि गृहात्। वरम्। अन्यदप्येकं विधेहि। अस्माकं गृहं गत्वा काँश्चिद् वटकान् किञ्चिच्चोपदंशलेह्यां समानय।" विद्याधरमहाभागोऽब्रवीत्।

अविलम्बितमेव वटका लेह्या च समागताः। नववधूरिव सौकुमार्यं प्रदर्शयन्ती कुसुमलक्ष्मीर्मम लघुस्तम्भफलके तां प्राधारिकां न्यदधात्। लेह्योपदंशं वटकाँस्तान् भुञ्जानस्य मम रसना यां तृप्तिमन्वभवद् वर्णनातीता खलु सा। वटकानां मूलरुच्या सार्धं यस्मिन्वातावरणे ते व्यश्राण्यन्त, तस्याऽपि रुचिः सम्भेदमापन्नाऽऽसीत्। तदनु समायाद् ब्रह्मकषायः। सर्वथा

संवदति स्म महाराष्ट्रीयेनाऽऽस्वादेन तस्याऽऽस्वादः ।

विद्याधरमहाभागोऽपृच्छत्—"उच्यताम् । वर्तते न वा भवत्पुण्यपत्तनीयो ब्रह्मकषायः ?"

"सर्वथा ।" अहमवोचम् ।

भूयोऽपि सस्मिताभ्यां लोचनाभ्यां मां प्रत्यपश्यत् कुसुमलक्ष्मीः । लोचनानां तस्मिन् स्निग्धे प्रकाशे निलीनाऽऽसीत् काऽपि कृतार्थता ।

अवासीयत ब्रह्मकषायनिबन्धनः कार्यक्रमः । कुसुमलक्ष्मीवर्धमानकं प्राधारिकां च समादाय बहिर्निर्जगाम । विद्याधरमहाभागो मां व्यजिज्ञपद् यत् श्वो यशवन्तपुरे मम प्रवचनकार्यक्रमो निर्धारितो वर्तते । तस्माद् अद्य सायङ्काले मया खल्वस्मात् स्थानात् श्रीरामपुरं प्रति गन्तव्यमस्तीति ।

मदीयं मनः खल्वेतेभ्यो भाषणप्रवचननिबन्धनेभ्यः कार्यक्रमेभ्यः सर्वथा पराजयत । परमन्तरेणैतान् द्रव्यार्जनार्थो नासीदन्यः कश्चनाप्यभ्युपायः । तस्मात् केङ्गेरितो बेंगलूरं प्रति गमनार्थं खल्वनिच्छयैवोदयुञ्जि । अन्यथा केङ्गेरिगतं तादृशं शान्तं, स्निग्धं, निभृतं, निरुपद्रवं च वातावरणं विहाय नगरगते विविधोपद्रवाक्रोशसहस्रसङ्कुले वातावरणे को नु गन्तुमुद्युञ्जीत ?

अगच्छद् विद्याधरमहाभागः । अहम्पुनरातपे शोषणार्थं स्थापितानि वस्त्राणि मदीयानि समगृह्णाम् । छादनपटपुटोदरे समावेश्य च तानि बृहति प्रसेवके स्वकीये न्यदधाम् । किन्तु बेंगलूरं प्रति निर्गमनाय सर्वथा समनह्ये ।

कुसुमलक्ष्मीर्यदा कुट्यां न्यक्षिपत् पादौ तदा तत्समकाल-

मेनाहमवोचम्—"किम् आगमिष्यसि बेंगलूरम् ?"

प्रश्नमिमं मदीयमाकर्ण्य तत्क्षणमेव सा भावगुरुत्वमापेदे। नैव निरपतत् खल्वेकमपि वाक्यं तस्य मुखात्। केवलं साभिप्रायाभ्यां लोचनाभ्यां मां विलोकयन्ती सा मुहूर्त्तमेकं समस्तम्भत। कतिपयैः क्षणैः साऽब्रवीत्—"ब्रह्मन् विकासमहाभाग, प्राभातिकाः खल्वद्यतना नदीतीरगताः क्षणा इतोऽपि स्म्रियन्ते मया। नाहं तान् प्रभवामि विस्मर्तुम्। भवदीयः स उत्सङ्गः स च भवदीयो दोर्बन्धः—यत्सत्यं कीदृशो दिव्यः कीदृशोऽलौकिकश्चासीदनुभवः स ! नास्ति किं कश्चनाप्यभ्युपायो येन तस्यैवानुभवस्योत्सङ्गेऽत्यन्ताय निपात्य स्वात्मानं परवज्जीवितमिदं स्वकीयं समापयेयम् ?"

तस्या नेत्रशुक्ती भूयोऽपि बाष्पतरलत्वमभजेताम्। भूयोऽपि जलेनापूर्येताम्। सा तस्यामेव दशायां कञ्चित्कालं तत्रास्तम्भत। तस्या लोचनयोस्तस्याः समुद्गाढोऽभिलाषः परवत्त्वं चोभयमपि सर्वथा स्फुटीभूतमासीत्। एकतो व्यावर्त्य स्वकीयं मुखं भूयोऽपि सा भाषितुमारभत—"नैव भवान् वेदितुं पारयिष्यति कीदृशं नीरसं, कीदृशमेकाकि, कीदृशं च परवशमस्ति मदीयं जीवितमिति। तथाविधं सुविस्तीर्णं मरुस्थलं मे जीवितं प्रतिभाति, यत्र हि समन्तात् सुदूरं यावद् नैवालोक्यते शाद्वलस्य चिह्नमपि कुत्रचित्। जीविते खल्वस्मिन्मदीये कुत्रापि विनोदो नास्ति ; स्मितं नास्ति ; हसितं नास्ति। सर्वदा मुखमण्डले खलु मदीये विभीषणमिव गाम्भीर्यं प्रसृतं तिष्ठति। लोचने इमे मदीये भावशून्ये सती परितः खल्वाकाशाभिमुखं भ्राम्यतः। सुदूरं यावद् नहि तादृशः कश्चनाऽपि दृष्टिगोचरो

भवति जनो, यस्य पुरतो मनोगतां स्वकीयां व्यथामिमां व्यक्तीकृत्य प्रतप्तमिदं मामकीनं मनो मुहूर्त्तं यावच्छीतलतां नयेयम्; मुहूर्त्तं यावद् जीवितगतां चिरन्तनीं नीरसतां सरसतायां परिणामयेयम्। ब्रह्मन् विकासमहाभाग, नाहमनृतं ब्रवीमि। अनेकेषां संवत्सराणामनन्तरमहं भवता सहैव विनोदमकरवम्; भवता सहैवाहसम्; असमये। अन्येद्युर्भवान् उत्सङ्गे खलु मदीये मूर्धानं स्वकीयं निक्षिप्य रोदिति स्म न वा, मदीये जीविते प्रथम एव खल्वनुभवः स, यदा स्वकीयस्यैकलस्य जीवितस्य प्रतिबिम्बं भवदीयेष्वश्रुषु प्रतिफलितमपश्यम्। अन्वभवस् चापि भवान् मादृश एव खल्वेकाकी मत्समव्यथश्च विद्यते जात्विति। यत्सत्यं किं भवानपि मादृश एवैकाकी व्यथितश्च? यद्येवं तर्हि किमिमे व्यथिते द्वे जीविते वस्तुतच्छाययोरिवाऽविच्छिन्ने सती अत्यन्ताय परस्परस्य समीपं नैवागन्तुमर्हतः? किम्···भवान्··· अत्यन्ताय···मां···भवदीयां···जीवितसहचरीं···सहधर्मचारिणीं··· नैव···कर्तुम्···अर्हति···?"

अवेपत तस्याः कृत्स्नमपि शरीरम्। स्थूला रोचिष्णवश्च प्रस्वेदबिन्दव आविरभूवँस्तदीये मुखमण्डले। सा स्वकीयां शारीरिकीं मानसिकीं च कृत्स्नामपि शक्तिं कृत्स्नं चापि धैर्यं संगृह्याऽत्यन्तमायासपूर्वकं वाक्यानि खल्विमान्युच्चारयतीति प्रत्यैयत।

भूयोऽपि सा वक्तुमुपचक्रमे—"अहं संन्यासिनः खल्वेकस्य मातृहीना कन्यकाऽस्मि। मम जनको विरक्तिमुपास्ते। अहमप्यवाञ्छम् विरक्तिमेवोपासीय यावज्जीवमिति। जनकः खल्वनेककृत्वो मामुवाच—'वत्से, कियत्कालं स्थास्यसि खल्वेकाकिनी? कमपि तव जीवितसहचरमन्विष्येयम्?' इति। परमहमवदम्—

'अहन्तावदिदमेकाकिजीवितमेव भद्रं प्रत्येमि । इच्छामि भवादृश्येव विरक्तेः संयमस्य चोपासनां कुर्वीये'ति । जनकः प्रोवाच —'वत्से, अनुरक्तेरनन्तरमस्ति खलु विरक्तेः क्रमः । कथमतिक्रमितुमर्हसि त्वं निसर्गानुमोदितमिमं बलवन्तं क्रममि'ति । परं नाहमश्रृणवम् । स्वयमेव खल्विममात्मच्छलनाया मार्गमहमवालम्बे । परमद्य भवदुत्सङ्गसङ्गमनानन्तरं, भवद्दोर्बन्धेनात्मन आबन्धनानन्तरं किञ्च तदवर्णनीयरसस्पर्शानुभूत्यनन्तरमहं सर्वथाऽवाबुध्ये मज्जनकोक्तमेव वचो भूतार्थपरिदर्शकमासीदिति । अनुरक्तेः प्रबलं मायाकर्षणं नहि जनः प्रभवति लीलया विजेतुम् । किं भवानपि मादृश एव विरक्तिमुपास्त ? अस्यां विरक्त्युपासनायां कश्चनान्तरायो मा भूदित्यनयैव धिया किं तस्मिन्नहनि रात्रौ मम गृहं प्रत्यागमनमनुचितमित्यालोचयामास भवान् ? किं मादृशमेवात्मप्रवञ्चनस्य, आत्मच्छलनाया, आत्मपीडनस्य च मार्गमन्वेति भवानपि ? यद्येवं तर्हि ब्रह्मन् विकासमहाभाग, किमावां समानधर्माणौ प्राणिनावद्य परस्परस्यान्तिकं नैवागन्तुमर्हावः ? अनुरक्तेः पिच्छिलं पङ्कमयं खल्वेतं प्रदेशं संस्पृशन्नेवैष विरक्तेरात्मसंयमस्य च राजमार्गः सुदूरं प्रतिसर्पति । कियत्कालमावामेतेनाऽसंस्पृष्टौ स्थास्यावः ? किमध्यवस्यति भवान् ? ब्रवीतु तावत् ।"

सा विरराम । करकर्पटेन मुखमण्डले प्रादुर्भूतं चेलक्नोपञ्च गात्रेभ्यः क्षरन्तं प्रस्वेदमपमार्ज्य तदेकदृष्ट्या मां पश्यन्ती तस्थौ ।

"एतदर्थमेव तावदहं मया सह बेंगलूरं प्रति गमनाय त्वामपृच्छम् !" तस्यास्तां घनीभूतां गम्भीरतां विरलोकर्तुं कामोऽहं विनोदोपेतेन वचसा व्याहरम्—"ब्रूहि वर्तसे किं संसिद्धा ?

इदानीमेव, अविलम्बितमेव, एतत्क्षणमेवाऽस्य बहुविकटस्य जीवनमार्गस्याऽभिनवौ पथिकावावां परस्परस्य हस्तमादाय निष्पताव: । वाञ्छसि चेद् आगच्छ । अहं सर्वथा सन्नद्धोऽस्मि निष्पतितुम् ।"

तस्या लोचने प्राकाशेताम् । साऽब्रवीत्—"अपरमेकं मुहूर्तं प्रतिपालयतु भवान् । एषा खल्वहं स्वकीयं कक्षं गत्वाऽऽगच्छामि । अहं सज्जाऽस्मि । सर्वविधा आशङ्का:, प्रत्याशङ्का, लोकभयमित्यादिकं परित्यज्य भवता सह समायास्याम्यहम् । मुहूर्तमात्रमेव प्रतिपालनीयं भविष्यति ।"

सा निरगच्छत् । कियती हर्षगद्‌गदा ! कियती हर्षोत्फुल्ला ! अहमात्मन्येवात्मनाऽवदम्—'जगत्पते, जीवितगते खल्वेतस्मिन्नत्यन्तमल्पप्रमाणे मिलने, त्वदीयानामत्यन्तं क्षुद्रशकलानामेतादृशे क्षुद्रमिलने यद्येतावानानन्दोद्रेक:, एतावान् रस:, एतावच्च मधु विराजते, तर्हि समेषामेषामंशानां त्वया सह भविष्यमाणे तस्मिन् 'महति मिलने' कियानानन्द:, कियान् रस:, कियच्च मधु भविता ?'

मया वस्त्राणि सन्धृतानि । प्रसेव: सन्धृत: । क्वचित्किञ्चिदावश्यकं वस्तु तावन्नैव विस्मरामीति सम्यक्संवीक्षितम् । अहमस्मि जात्या खल्वतिमात्रं विस्मरणस्वभाव: । यदा कदाचित् कस्माच्चिदपि स्थानात्कुत्रचिदन्यत्र गन्तुमारभे, तदा द्विस्त्रिस्स्मृतिशक्त्या स्वीयया कठिनं व्यायमनं कारयाम्येव । एतावत्यपि व्यतिकरे सा स्मृतिशक्तिर्मां व्यंसयत्येव कदाचित्कदाचित् क्वचिदहमुदपात्रं विस्मरामि, क्वचित्कटोरिकाम्, क्वचित्पुस्तकम् क्वचिदङ्गप्रोञ्छनम्, क्वचिच्चाप्यन्यदेव किमप्यत्यावश्यकं

वस्तु । तानि वस्तूनि तदा कुतोऽपि स्मृतिपथमायान्ति, यदा मम कृते प्रत्यावर्तनं दुष्करं सञ्जायते । यद्वा व्यतीतेषु सत्स्वनेकेषु दिवसेषु यदा तेषां वस्तूनां तीव्रतयाऽऽवश्यकतामनुभवामि, तदा। एतस्मात्कारणात्तदल्पीयोऽपि वस्तुजातं मया क्रियासमभिहारेण संवीक्षितम् । अथ यदा सर्वमनवद्यमिति ज्ञातं, तदा निश्चिन्तः सन्नहं कन्नडपुस्तकं खल्वेकमादाय पठितुं प्रववृते ।

किञ्चित्कालानन्तरं गृहीतस्वकीयवस्तुसम्भारा विद्याधर-महाभागद्वितीया कुसुमलक्ष्मीस्तत्र समायात्। विद्याधरमहाभागाय वेंगलूरगमनविषये सा सर्वमपि न्यवेदयदिव निवेदितव्यजातमिति प्रत्यैयत । स महाभागः कुट्यां प्रवेशसमकालमेव मामभ्यदधात्—"चलतु तर्हि । केङ्गेरिगन्त्रीप्रस्थानकं यावद् गत्वा भवन्तौ प्रस्थाप्य प्रत्यागच्छामि ।"

वयं त्रयोऽपि प्रातिष्ठामहि । मध्येमार्गमहं विद्याधरमहा-भागमवोचम्—"कर्णाटकप्रदेशगतानि सर्वाण्यप्यन्यानि वस्तूनि शक्नुवन्ति मदीयां प्रीतिमावोढुम् ऋते 'रागी'मोदकात् ।"

सोऽब्रवीत्—"परमार्थतः खल्विदमत्रत्यानां निर्धनानां जनानामन्नमस्ति । परमद्यत्वे दुष्प्राप्यत्वाद् इतरस्य प्रकृष्ट-धान्यस्य च्छात्राणां कृते खल्वेतादृशनिकृष्टान्नप्रबन्धनम् अपरिहार्यं सञ्जातमस्ति । किञ्च च्छात्राः खल्वपि पार्श्ववर्तिनामेव संवसथानां निवासिनो निर्धनेभ्यः कुटुम्बेभ्य एव समागताः सन्तीत्येतस्मात्कारणात् तेषां कृते नास्तीदमसंस्तुतं वस्तु । भवत्प्रदेशे खल्वपि जना यावनालं[1] भक्षयन्ति न वा ? तथा-

---

१. यावनालः='जवार' इति भाषायाम् ।

विधमेव किमप्यत्राप्यवधार्यताम् ।"

अहमवोचम्—"भवदीयः 'साम्भारो' मह्यमतिमात्रम-रूरुचत् । सूपाभ्यन्तर एव शाकादिकं निक्षिप्य रन्धनस्य योजनेयं प्रीतिमावहति ।"

वार्तालापसुखं खल्वेवमास्वादयन्तो वयं केङ्गेरिग्रामस्य सीमायामागच्छाम । तत्र स्थाने खल्वेकस्मिन् महान्तं जनसम्मर्द-मवालोकयाम । विद्याधरमहाभागो व्यजिज्ञपद् यदिदं राजकीय-मन्नकोष्ठकमस्तीति । अत्र खल्वन्नधान्यं क्रेतुं कृत्स्नोऽपि संवसथः समवेतो भवति । वेलायामन्नधान्यं संगृहीतं स्यादिति धियाऽर्धरात्र एव समेत्य जना अत्र प्रतीक्षापङ्क्तिं निर्मिमते। भीषणायां शरद्यपि खल्विमे जना एवमेवार्धरात्रेऽत्र समायान्ति यावद्रात्रि च शीतेन भृशं क्लिश्यन्त आसते । तथात्वेऽपि कदा-चिदेवं सञ्जायते यद् यदा प्रातःकालेऽन्नकोष्ठककपाटमपाव्रियते, तदा धान्यस्य बीजशेषोऽपि नैव दृग्गोचरो भवति । धान्याग-मनोत्कण्ठया प्रतीक्षापङ्क्तिगतस्वकीयानुपूर्व्यंपच्छेदभिया च जना दैनिकं कार्योद्योगं परित्यज्याप्यत्रैवावस्थानमाद्रियन्ते । कदाचि-द्दिनद्वयं वा दिनत्रयं वा तस्मिन्नन्नकोष्ठके धान्यं नैवायाति। क्षुत्क्षामाः पिपासाकुलिताश्च ते तथैव तावत्कालं यावदन्नकोष्ठक-सम्मुखं पङ्क्तिक्रमेणावतिष्ठन्ते । कदाचिद् धान्यमागतमपि निःशेषतां याति । पुरोवर्तिनो जनास्तत्संगृह्णन्ति पश्चाद्वर्तिनश्च तपस्विनस्तथैव रिक्तहस्ता हताशा भग्नहृदयाश्च प्रति-निवर्तन्ते ।"

"नूनमतिमात्रं शोचनीया नामेयं दशा । शासनयन्त्रं खल्व-त्रत्यं कमुपायमस्मिन्विषये समवलम्बते ?"

"शासनयन्त्रमपि वराकं किं कुर्यात् ? शासनपदाधिकारिणः स्वसामर्थ्यानुरूपं प्रभूतं प्रयतन्ते। यावताऽन्नधान्यस्य विषयः सम्प्रति सर्वस्मिन्नेवापि भारते समानभावेन विषमस्ततो नैव तेषां यत्नः फलवान् भवति।"

"ओम् श्रीमन्। अन्नसङ्कटश्चेदेकस्मिन्नेव प्रदेशे दुरवगाहः स्यात्, शक्येत कश्चन प्रत्युपायस्तस्य कर्तुमपि। सर्वस्मिन्नेव देशे दुरवगाहे सत्यन्नसङ्कटे कः किं शक्नुयात्कर्तुम् ? कदा खल्वियं विपदपयास्यतीति को वेद ?"

"भवतु। नाहं न्यवेदयम् जातु यशवन्तपुरे श्वः कः खलु भवदीयः कार्यक्रम इति। तत्र विद्यमानस्यार्यसमाजस्य साप्ताहिकः सत्सङ्गः खलु स, यत्र हि भवता श्वः प्रवक्तव्यम्। बेंगलूर-बाष्पगन्त्रीप्रस्थानकाद् निर्गत्य सर्वथा श्रीरामपुरमेव गच्छतु भवान्। मार्गो विस्मृतश्चेद् भ्रातृजा खल्वियं मदीया भवन्तं तत्र निरापदं प्रापयिष्यति।"

अहं कुसुमलक्ष्मीं प्रत्यवालोकयम्। सा चक्षुषोरभ्यन्तरादेव किञ्चिदवदद् यदभिप्रायवेदनं नासीद् दुष्करं किमपि।

केङ्गेरिबाष्पगन्त्रीप्रस्थानकं सम्प्राप्नुम। विद्याधर-महाभागः पर्यक्रीणीत द्वितीयायाः श्रेण्या यात्रापत्रद्वयमावयोः कृते। पञ्चषान् निमेषान् अनु बेंगलूरगामिनी बाष्पगन्त्री समागच्छत्। आवामुभावपि स्वस्ववस्तुजातं सन्धार्य द्वितीय-श्रेण्याः शिबके खल्वेकस्मिन् आरोहाव। एवन्तु नाम द्वितीयश्रेणी-शिबकेऽपि तस्मिन्नाऽऽसीदल्पीयान् जनसम्मर्दस्तथापि यात्रिभि-रावयोः कृते कृपया विहितः समीचीनो निषदनप्रबन्धः। प्रस्थि-तायां बाष्पगन्त्र्यां खल्वेकस्या एव खडक्किकाया बहि-

विलोकयन्तावावां विद्याधरमहाभागं नमश्चक्रवहे। सुचिरमसावावां निभालयँस्तत्राऽऽस्त। साभिप्रायमासीत्तदीयं तादृशं निभालनमिति वक्तव्यं भवति। परं कः खल्वासीत्सोऽभिप्राय इति कथं कश्चनापि शक्नुयाद् वक्तुम् ?

भवतु। सूदूरं प्रस्थानकाद् निर्यातायां बाष्पगन्त्र्यां स तिरोबभूव। तिरोभूते तस्मिँस्तत्कालं कुसुमलक्ष्मीर्मम हस्तं स्वहस्तेन समादाय न्यपीडयत्। नूनं नासीदियत्ता कापि तस्या आनन्दस्य!

## अष्टमः समुच्छ्वासः।

बेंगलूरप्रस्थानके बाष्पगन्त्र्या अवतरणानन्तरं कुसुमलक्ष्मीर्मां सरलं तदीयमावसथमेव गन्तुमागृह्णात्। आदौ श्रीधरमहाभागस्य समीपं गन्तव्यमिति मामकीनमासीन्मनः। ममागमनं खल्वसौ प्रतीक्षमाणो भवेदिति प्रत्यायमहम्। परमबिभयमपि—यदि प्रथमं तत्र गच्छेयम् तर्हि तथाकारमहं तत्रैव स्थानबद्धो भवेयम्, यथा कुसुमलक्ष्म्या आवसथं प्रति गमनं नितरां दुष्करं सम्पद्येतेति। यद्यहं प्रथमं कुसुमलक्ष्म्या आवसथं गच्छेयम् तर्हि तत्स्थानं परित्यज्य प्रभविष्यति किम्मे मनः क्वाप्यन्यत्र गन्तुम् लघुनोपायेन ? अथ नैव गच्छेयम् कुसुमलक्ष्म्या आवसथं तर्हि तादृशस्तीव्रतरो मनोभङ्गस्तस्याः सञ्जायेत, येन मन्य उभावप्यावां भृशं क्लिश्येव। किञ्च कुसुमलक्ष्म्याः सुकुमारं मनः शक्ष्यति किं भङ्क्तुमपि कदाचिद् मादृशो जनः ? एतावता श्रीधरमहाभागस्य

प्रतीक्षणमुपेक्ष्याहं कुसुमलक्ष्म्या एवाऽऽग्रहं शिरोधार्यमकरवम्। किञ्चाऽविलम्बितमेवावां तस्या आवसथं सम्प्राप्नुव।

तत्र सा स्वगृहकार्येषु व्यापृता समजायत। अहं पुनर्बहिर्भाग उपवेशन्यां खल्वेकस्यामुपाविशम्।

अथ मन्ये विंशतिर्दिवसा व्यतिक्रान्ता भवेयुस्तदा प्रभृति, यदा प्रथममहमत्र नवागन्तुकभावेनाऽभ्यागच्छम्। तस्य दिवसस्य समग्रा दृश्यावलिर्मम नेत्रयोः पुरस्ताद् मूर्तिमच्चित्रमिवोपेत्याऽतिष्ठत्। तस्मिन्नहनि कीदृशः सङ्कोचशीलोऽसद्वृत्तभीरुः समाजभीरुश्चाभवम् खल्वहम्। स्त्रीभीरुः खल्वप्यहमासमिति वदेयम् चेत्सुवचं तद् भवेत्। कुसुमलक्ष्म्याः करतले निहितानां लवङ्गानामादानमपि खल्वेको विषमः समभवदेतस्माद् भीरुत्वात्कारणात्। तदनन्तरं कथमात्मानं कुसुमलक्ष्म्याः कौशेयसुकोमल उत्सङ्गे न्यक्षिपमित्येकैकशः सर्वाण्यपि तानि वस्तूनि स्मारं स्मारमहं नूतनयोपक्रमणिकया समुद्भूतपुलकः समजाये। काँश्चित्क्षणान् भूयोऽप्यहमात्मानं नवागन्तुकमेवाऽन्वभवम्। मध्ये-मध्ये समुपेत्य कुसुमलक्ष्मीर्मां विलोक्य प्रतियाति स्म। एतावता श्रमेण संगृहीतो यः शेवधिस्तं कश्चन स्तेनस्तु नैवापनयतीत्याशङ्कया जातु। कदाचित्-कदाचित् पृच्छति स्म—'कथ्यताम्। किम्प्रवर्तते ? चिन्तनम् ? किमुपजीव्य ? मानवीयं जीवितमुपजीव्य ? पुनः कथयति स्म—'अधिकं मा कार्षीद् भवान् चिन्तनम्'। भूयः कदाचिदागत्य पृच्छति स्म—'एतत्तु नैव चिन्तयति भवान् अत्रागत्य कस्मिन् श्वभ्रे निपतितोऽस्मीति ? स्वैरं विहायसा समुत्पतनशीलः पतत्रिकल्पोऽहं कस्मिन् शलाकापञ्जरे प्रतिबद्धोऽस्मीति ?' एतच्छ्रुत्वा खल्वहं विहसामि स्म केवलम्। कदा-

चिदागत्य पृच्छति स्म—'भवदर्थं रागीमोदकान् स्वेदयेयम्? भक्षयिष्यति ?' अहं वदामि स्म—'मा मैवम् । नेदृशं नृशंसं समाचरणीयम् ।' उच्चैर्विहस्य सा विनिर्याति स्म ।

किञ्चित्कालानन्तरं मामुपेत्य साऽपृच्छत्—"स्नानं तावद् भवान् उष्णेनैव जलेन करिष्यति न वा ?"

"कुत एतत् ? अहं तावत्सामान्यतया शीतलेनैव जलेन स्नानं करोमि ।"

"कश्चिदुष्णं जलं विधाय स्नपयिता भवेत्, तदैव तावदुष्णेन जलेन स्नास्यति न वा भवान् ? अद्य तावद् भवान् मम गेहे तिष्ठति । यथा मया निर्देष्टव्यम् तथैव भवता समाचरितव्यम् ।"

"परं येन मम गात्राण्येव दह्येरँस्तावदुष्णं न स्याज्जलमिति निपुणं ध्यातव्यम् ।"

"नैव-नैव । नैव तावदुष्णं भविष्यति । सा खलु मदीया कार्यभूमिः । स्नास्यति चेदेकदा भवानुष्णेन जलेन खल्वत्यन्ताय तर्हि विस्मरिष्यति भवान् शीतलजलेन स्नानम् ।"

प्रसङ्गोपात्तमहं तामपृच्छम्—"किमत्र द्वादशस्वपि संवत्सरमासेषूष्णेनैव जलेन स्नान्ति जनाः ?"

सा प्रत्यब्रवीत्—"ओम् द्वादशस्वपि संवत्सरमासेषु ।"

"उष्णकालेऽपि ?"

"ओम् ।"

"आश्चर्यमेव मन्ये ।"

"आश्चर्यं किंविषयम् ? उष्णकाले खल्वेकदोष्णेन जलेन स्नात्वा पश्यतु । सर्वं रहस्यं प्रतिभोत्स्यते भवान् ।"

साऽगच्छत् । किञ्च कतिपयैरेव क्षणैर्बृहदाकारे द्वे अङ्ग

प्रोञ्छने रक्तवर्णं चैकं पल्यूणकरङ्कम्[1] आदाय मम समीपं प्रत्यागच्छत् ।

"वरम् । उत्तिष्ठतु खल्विदानीम् । निर्वर्तयतु स्नानाचारम् ।" साऽभणत् ।

अहमुदतिष्ठम् । परिहितानि वस्त्राण्यवतार्याऽङ्गप्रोञ्छनं खल्वेकं कटिप्रदेशे परिणह्य स्कन्धे खल्वपरं समारोप्य च स्नानगृहाभ्यन्तरे न्यविशे । बृहत्युदभाण्डके खल्वेकस्मिन्नुष्णं जलमुम्भितमासीत् । समीपमेव खल्वेकमुदपात्रं काष्ठपट्टासनं च स्थापिते आस्ताम् । अहं स्नानगृहद्वारकपाटं पिधायान्तर्भागेनार्गलिकां समायोजयितुमुद्युक्त एवासम्, यदा साऽन्तरागच्छत् । आगमनसमकालं मामादिशच्च—"भवान् काष्ठपट्टासनमलङ्करोतु ।" अहमुपाविशम् । सा सपद्येव मदीये स्कन्धे समारोपितमङ्गप्रोञ्छनमुदहरद्, नागदन्तके च तदस्थापयत् । भूयोऽप्यादिशत्—"उपविशतु भवदीयायां सन्ध्याध्यानमुद्रायाम्—यथा खलु भवान् सामान्यतया समाचरति ।"

अहमपृच्छम्—"किं नेत्रे अपि निमीलयेयम् ?"

"ओम् । नेत्रे अपि निमीलयतु । अथवोन्मील्यैव तिष्ठतु । का हानिः ?"

तत्कालमेव सा समीपस्थमुदपात्रमुदतोलयत् । जलेनापूरयत् किञ्च मम पादयोरुपरि तमवाङ्मुखमकरोत् । अवर्णनीयः खल्वासीत् तज्जलगतः सुखोष्णः स्पर्शः ।

साऽवदत्—"अयमत्र विशेषः । उष्णेन जलेन स्नाने कर्तव्ये

---

१. पल्यूणकरङ्कः='सोपकेस' इत्यांग्लभाषायाम् ।

सर्वप्रथमं जलं पादयोरेव क्षेपणीयम् । न पुनः शिरसि ।"

ततः पञ्चषाणि जलपूर्णान्युदपात्राणि मम शिरसि, शरीरावयवेषु च खल्वितरेषु क्षिप्त्वा पल्यूणकरङ्काद् विश्रुतं मैसूरश्रीखण्डपल्यूणमुद्धृत्य मम सर्वेष्वपि गात्रेष्वनुलेपयितुमुपाक्रमत । तद् दृश्यं नेत्रयोः पुरस्तादुपातिष्ठत, यत्र द्वारिकापुर्यां श्रीकृष्णः स्वकीये राजप्रासादे स्वकीयं सखायं सुदामानं स्नपयामास । एकतो रुक्मिणी ह्यपरतश्च सत्यभामा उभे अपि स्वकीयाभ्यां कोमलाभ्यां कराभ्यां सुदाम्नः शरीरमुद्वर्तनादिभिरनुलेप्य परिममार्जतुः सम्मुखं च श्रीकृष्णः स्वयं तस्य पादावुपघर्षमुपघर्षं क्षालयामास । तदानीं यदप्यनुबभूव सुदामा, नूनं कुसुमलक्ष्म्या हस्ताभ्यां स्नानं विदधन्नहमपि खल्विदानीं तदेवान्वभवम् । एकला सत्यपि सा रुक्मिणीसत्यभामयोः श्रीकृष्णस्य च कार्यं स्वयमेवाऽकरोत् । अहं तावदात्मानं तदधीनं विधायाऽतिष्ठम् । शरीरस्याऽन्येषु भागेषु पल्यूणलेपनकार्यं समाप्य सा प्राब्रवीत्—"बाढम् । नेत्रे निमीलयतु खल्विदानीम् । एकपद एव निमीलयतु ।"

अहं नेत्रे न्यमीलयम् । सुरभिगन्धिश्रीखण्डपल्यूणफेनसंवलितौ तदीयौ हस्तौ खल्विदानीं मम मुखमण्डले पर्यभ्राम्येताम् । ललाटे, नासायाम्, चिबुके, कपोलयोः, कर्णशिलायाम्, गले—सर्वत्र तदीयौ फेनिलौ हस्तौ पर्यभ्राम्येताम् । यस्मिन् भागे तावगच्छताम्, स भागः खल्वात्मानं कृतार्थमन्वभवत् । प्रकाशमयमन्वभवत् । किञ्च यस्माद् भागात्तावपासरताम्, स भागो दौर्मनस्यं—विवर्णभावं प्रापद्यत । तथैव यथा कालिदासीयरघुवंशगतोक्त्यनुसारं 'सञ्चारिण्यां दीपशिखायां' पुरस्तादपयातायां 'नरेन्द्रमार्गाट्टः' प्रपद्यते स्म । कुसुमलक्ष्मीर्मनोयोगेन तन्मयतया चैत-

त्सर्वमकरोत् । किञ्चाहमपि तन्मयः सन्नाऽऽसि । जीवनगतानामनन्तानामसंख्यातानामतिभीषणानां च चञ्चलतानां मध्ये केचित् खल्विम एव क्षणाः सन्ति, यैरिदं जीवनं स्पृहणीयभावं प्रतिपद्यते । अन्यथा किमस्त्यस्मिन् जीवने तादृशं, येन मानवः खल्विमां जीवनधारामविच्छिन्नां कल्पयितुं यत्नवान् भवेत् ? तन्मयत्वमेव विशुद्धः खल्वानन्दः । तन्मयत्वानुभूतिरेव खलु रसानुभूतिः—ब्रह्मास्वादसहोदरीभूतकाव्यरसानुभूतिः ।...

अत्रान्तर एव खल्वत्युष्णोदकपूर्णमुदपात्रमेकं शिरस्यवाङ्मुखमभूत् । अहं चमत्कृतः समभवम् । नेत्रे उदमीलयम् । कुसुमलक्ष्मीरुच्चैर्विहस्याऽब्रवीत्— "अजानामहं नेत्रनिमीलनसमकालमेव बाह्यं खल्विदं विश्वं विस्मृत्य भवान् स्वकीये ह्यभिमततमे विचारलोके विचरितुं प्रयास्यतीति ।"

"हन्त भोः, एतावदुष्णमुदकम् ?—बाढम् । नूनमहं समाहित एव समजाये । इतोऽपि सर्वः स्नानाचारो नैव पूर्णतां गतः किम् ?" अहमपृच्छम् ।

"अथेदानीं किञ्चित्कालं शान्तिमास्थाय तिष्ठतु । इदानीमेष स्नानस्य खल्वन्तिम उपक्रमः ।" एतदुक्त्वा सा सुखोष्णेन पयसा मदीयं सर्वाङ्गमभिषेक्तुमारेभे । यदा चतुर्दशवर्षाणि यावद् विपिनवासं स्वीकृत्य, तदवसाने रामोऽयोध्यापुरीं प्रत्यावर्तत, तदा तत्र सर्वासामपि नदीनां तीर्थोदकेन राज्यसिंहासनार्थं तस्य महाभिषेको व्यधीयत । तत्प्रसङ्गे यदा खल्वेकैकसुवर्णकलशक्रमेणाऽव्यवहिता प्रत्येकं नदीतोयधारा तस्य शिरसि व्यमुच्यत, तदानीं किमसावपि तादृशमेव किमपि नैवानुबभूव, 'यादृशमिदानीमहमन्वभवम् स्म ? अन्ततः कुसुमलक्ष्मीः स्वकरा-

ञ्जलावीषदिवोदकमादाय मम शिरसः समन्ताद् वर्तुलाकारं तद्विमुच्य शनैरेव मम पृष्ठभागं स्वकरतलेनाऽघट्टयत्। अहमपृच्छम्—'किमेतदि'ति। 'इयं भवतः स्नानपरिसमाप्तिरि'ति सा प्रत्यब्रवीत्।

चिरायाऽव्याहतं स्नानमेवातिष्ठन्नेवंविध एवात्र तिष्ठेयमित्यभवत् तदानीं ममाभिलाषः। नैतावता स्नानेन समजायत मे श्रद्धाप्रतीघातः। ईषन्म्लानवदनस्तामहमपृच्छम्—"सञ्जाता किं स्नानपरिसमाप्तिः ?"

साऽब्रवीत्—"ओम् श्रीमन्। अथ श्वः।"

अहमुदतिष्ठम्। नागदन्तगतमङ्गप्रोञ्छनं हस्ताप्य मां सा स्वयं स्नानगृहाद् बहिर्निरगच्छत्। अहम्पुनरङ्गप्रोञ्छनेन स्वकीयं शरीरमनार्द्रीकृत्य वस्त्राणि परिधाय च बहिरायाम्।

उष्णोदकस्नानेन यत्सत्यं सर्वशरीरगाः स्नायवो बन्धमुक्ता इवाऽभवन्। सुसूक्ष्मेण स्वेदजालेन केनापि सर्वमपि शरीरं व्याप्तं समजायत। काप्यपूर्वा शान्तिः, काप्यपूर्वा स्नानोत्तरकालिकी खल्वानन्दानुभूतिरन्वभूयत।

कुसुमलक्ष्मीरब्रवीत्—"कञ्चित्कालं भवानत्रोपवेशन्यामुपविशतु। अहं खल्वपि स्नानं निर्वर्त्य समागच्छामि।"

किञ्च कतिपयैरेव क्षणैः सा स्नानं कृत्वा बहिरागच्छत्। सा नीलवर्णां खल्वेकां शाटिकामावेष्टच, स्नानजलार्द्रान् मूर्धजान् पृष्ठतो विकीर्य, वदनाच्चापि सूक्ष्मं सिसत्कारमेकं बहिर्मुञ्चन्ती तत्र समायात्। कृष्णवर्णे तदीये नेत्रे खल्विदानीं तदीयस्य वदनरामणीयकस्य कामप्यभूतपूर्वां वृद्धिं पुष्णती इव प्रत्यैयाताम्। एवन्तु खलु नेत्रे मानवमुखमण्डलगतं सार्वकालिकं मण्डनं विद्येते।

यथा कस्यापि गृहस्थस्य द्वौ शिशू स्वगृहमागतानां नवागन्तुकानां पुरस्ताद् गृहगताँस्ताँस्तान् मनोरञ्जकान् व्यतिकराननारतं स्वकीयया मनोहारिण्या शिशुवाण्या निवदयन्तौ तिष्ठतस्तथैवेमे नेत्रे खल्वप्यव्याहतं मानवीयान्तःकरणगतान् कांश्चिद् व्यतिकरान् सर्वदा निवेदयती तिष्ठतः। यावता खल्विमे नेत्रे निरन्तरं किमपि व्याहरत एव, ततो नेत्रं 'चक्षुस्' इत्याचक्षते शब्दशास्त्रविदः। सर्वदा व्याख्यानशीलत्वादेव खल्विमे नेत्रे 'चक्षुषी' इति संशब्द्येते। 'चक्षुस्'शब्दस्य स एव धात्वर्थः। अहं व्यचिन्तयम् कुसुमलक्ष्म्या नेत्रे तावत् सर्वदैव मनोहारिणी सती तदीयमुखमण्डलगतामनिन्द्यशोभामनेकगुणितां विदधती तिष्ठतः। अस्मिन् स्नानोत्तरकाल एव तयोः कः खल्वेवंविधो विशेषः प्रादुर्भूतो, येन ते ममेतोऽप्यधिकं मनोहारिणी प्रतीयेते इति। अहमवालोकयम् न केवलं तदीये नेत्रे किन्तर्हि सर्वाण्येवाङ्गानि तस्याः शरीरगतानि स्नानोत्तरकालं नूतनानि समजायन्तेति। नूनं येऽपि निसर्गतो रम्या भवन्ति, तेषामेतदेव प्रतिपद्यते। ते यदपि समाचरिष्यन्ति, तत उत्तरकालं तेषां विग्रहे नूतनत्वं प्रादुर्भविष्यत्येव। शयीरँस्तर्हि, भोजनार्थं निषीदेयुस्तर्हि, भोजनं कृत्वोत्तिष्ठेयुस्तर्हि, केशान् विप्रकिरेयुस्तर्हि, वितूस्तयेयुस्तर्हि, वस्त्राणि नैव परिदध्युस्तर्हि, परिदध्युस्तर्हि, किञ्चैकदा परिहितान्यवतार्य खल्वन्यानि परिदध्युस्तर्हि—सर्वास्वेवावस्थासु किमपि नूतनमाकर्षणं तेषां मुखमण्डलेऽवश्यमवतीर्णं भविष्यति। नहि काचिदपि तादृशी क्रिया, यां ते कुर्युस्तत्करणोत्तरकालं च तेषां विग्रहे नूतनत्वं नैव प्रतिपद्येत। प्रत्येकं परवर्तिन्याः क्रियाया उत्तरकालं ते पूर्ववर्तिन्या अवस्थाया विलक्षणा नूतनाः किञ्चा-

धिकमाकर्षणगुणोपेताः प्रत्येष्यन्ते । रमणीयतेति यदुच्यते, तत्खल्विदमेव नाम । उक्तं चापि कविना—'क्षणे क्षणे यन्नवता-मुपैति तदेव रूपं रमणीयतायाः' इति ।

अहमेतेषु विचारेषु लीन इवाऽऽसम्, यदा खलु कुसुमलक्ष्मी-र्यत्सत्यं काचिदभिनवा कुसुमलक्ष्मीर्भूत्वा मम समक्षं देवलोक-कन्येव समुपातिष्ठत । नीलवर्णा शाटिका, श्वेतवर्णा च चोलिका । अद्भुते नास्तामिमे वस्त्रे । परमिमे परिधाय सा तावदद्भुता प्रत्यभात् । विशेषेण खलु तस्याः सर्वथा साधारणया रीत्या सूचीकृता सा श्वेतवर्णा चोलिका तावदतीव मनोमोहिका प्रत्यैयत । केशानां कर्णाटकीयप्रणाल्या धम्मिल्लरचना कृता-ऽऽसीत् । किञ्च द्वित्राणि बेंगलूरपुष्पाणि तत्र गुम्फितान्यासन् ।

अहमकथयम्— "कुसुमलक्ष्मि, एवंविधेषु नितरां साधा-रणेषु परिधानीयेषु त्वमेवंविधमलौकिकं लावण्यं पुष्णासि; यद्यसाधारणानि महार्घाणि च परिधानीयानि धारयेस्त्वं तर्हि मन्ये त्वदीयरूपलावण्यप्राखर्यस्य काचिदियत्तैव नावाधार्येत ।"

एतच्छ्रुत्वा साऽस्मयत । सा स्वकीयावुभावपि हस्तौ मम कण्ठे न्यस्य मामुपवेशन्या ऊर्ध्वमुत्थापयामास किञ्च मय्युत्थिते सत्यह्नाय मां स्वकीयेन वक्षसाऽऽसञ्जयामास । उवाच चापि— "नूनम् ?"

"अथ किम् ?"

"अथ भवान् ? भवानपि तावत्तथैव तावानेव चित्ताकर्षको लक्ष्यते ! भवतु । अथ चलतु । भुङ्क्ताम् । सर्वथा महाराष्ट्रीय-पद्धत्या साधितोऽस्त्यद्यतनः स्वयम्पाकः ।"

अथ यदाहं भोजनार्थमुपाविशम्, तदाऽपश्यम् यत्सत्यमेव

स्वयम्पाको महाराष्ट्रीयपद्धत्या साधित आसीत् । परिवेषण्यामेकस्मिन् पार्श्वे सम्पिष्टं किञ्चिल्लवणं, वृक्णस्य निम्बुकस्यैका फक्किका,[1] किञ्चित्सन्धानितकम्,[2] कोशिम्बीरकम्,[3] द्वे भाज्यौ,[4] भक्तम्, गौडं वरणम् (सप्पकः[5] खल्वाढक्याः सूपः), वरणस्योपरि घृतं च । समीपमेवैकस्मिन्नुदपात्रे पानीयं, पानीयस्योपस्पर्शनार्थञ्चैकं पुष्पपात्रम्[6] । अहमञ्जल्या किञ्चित्पानीयमादायादौ परिवेषण्याः परितो वर्तुलाकारमुपासिञ्चम् । तदनु तदुपास्पर्शञ्चापि । सर्वप्रथममहं भक्तेन सप्पकसूपेन चारभे । चपातिकाः प्रत्येकं चतुर्धाकृत्य सा मम परिवेषण्यां न्यदधात् किञ्चैकस्यां कटोरिकायामम्लाढकीसूपं[7] पर्यवेषयत् । इममम्लाढकीसूपं विलोक्यास्वाद्य च ममाश्चर्यस्येयत्ता नासीत् । अहमवोचम्—"कुसुमलक्ष्मि, एतदम्लाढकीसूपसाधनं कुतः शिक्षितं त्वया ? अस्याऽऽस्वादः सर्वथाऽस्मद्गृहसाधिताम्लाढकीसूपास्वादेन संवदति । अक्षरशस्तादृश एवैष सूपः ।"

"इदानीं तावन्मन्ये सप्रमाणमभ्युपागम्यत मम 'सुगृहिणीत्वम्' (पाकशास्त्रवैशारद्यम्) भवता ।"

"अवश्यमेव किञ्चित्कालं त्वमस्माकं महाराष्ट्रीयाणां गृहेषु न्यवसः । अन्यथा नैतादृशमम्लाढकीसूपं त्वमसाधयिष्यः ।" अहमवोचम् ।

---

१. फक्किका='फाँक' इति भाषायाम् । २. सन्धानितकम्='अचार' इति भाषायाम् । ३. दध्ना संस्कृतास्त्रपुसखण्डाः । ४. 'भाजी इति भवति श्राणा चेदि'ति पाणिनिः । ५. सप्पकः=फिक्कटः । 'फीका' इति भाषायाम् । ६. पुष्पपात्रम्='फुलपात्र' इति मराठीभाषायाम् । ७. अम्लाढकीसूपः='आमटी' इति मराठीभाषायाम् ।

सा साकूतं साचीकृतेन चक्षुषा मामवलोक्य प्राब्रवीत्—"रहस्यमेकं ज्ञातुमेषिष्यति भवान् ?"

"किं तद् ?"

मम जननी महाराष्ट्रीयैवासीत् । मम जनको माध्वकर्णाटक-ब्राह्मणोऽस्ति । मम जननी पुण्यपत्तनोत्पन्ना ऋक्शाखीयदेशस्थ-ब्राह्मणकन्यकाऽऽसीत् । तस्मादुभयोरपि प्रदेशयोः संस्कारा मयि विद्यन्ते । महाराष्ट्रप्रदेशस्य कृते नाहं परकीयाऽस्मि । अहं मराठीभाषामपि वेद्मि । नैव विश्वासश्चेद् भवता भवदीयायां मातृभाषायां भाषित्वा विलोक्यताम् ।"

एतच्छ्रवणसमकालमेवाहमापादमस्तकं रोमाञ्चितः समभवम् । कुसुमलक्ष्मीर्मदीयां मातृभाषामपि वेत्ति तर्हि! अहं मराठीभाषायामवोचम्—"अग, आतांपर्यंत हें सगळं मला सांगितलं कां नाहींस; माझ्यापासून लपवून कां ठेवलंस ?" ( अयि भद्रे, इदानीं यावदेतत्सर्वं कस्मान्न विज्ञापितं; कस्मान्मत्तो निगूह्य स्थापितमिदम् ? )

सा प्राब्रवीत्—"वाटलं, थोडीशी गंमत करावी आपली—म्हणून सांगितलं नाहीं ।"

किमिदमाश्चर्यम् ? तस्या मुखाद् विशुद्धमहाराष्ट्रीयोच्चारणोपेतां मराठीभाषामाकर्ण्य केनापि तस्यां वैद्युतिकं परिवर्तनमाहितमिति प्रत्यैयत । केनापि विद्युद्घुण्डिका प्रवर्तिता किञ्च तत्कालमेव कर्णाटकदेशीयकुसुमलक्ष्म्याः स्थाने महाराष्ट्रदेशीया कुसुमलक्ष्मीः समुपस्थिता । कीदृशं विलक्षणं परिवर्तनम् ? अहं स्थायं स्थायमाश्चर्यप्रदीप्तचक्षुष्कः समजाये । तस्या अधरगतं तत्कुसृत्युपेतमीषत्स्मितमपि महाराष्ट्रदेशीयं सञ्जातमासीत् ।

कथं भाषा जनस्य सम्पूर्णमप्याविर्भावं चमत्कारिकतया परिवर्तयतीत्येतस्य निदर्शनं कुसुमलक्ष्म्यास्तं महाराष्ट्रीयमवतारं वीक्ष्य प्रत्यक्षीकृतम् । भाषा खल्वपि कीदृशं चमत्कारि वर्तते वस्तु । इयं खल्वप्येतादृशो महानुपाधिर्भविष्यति किञ्चैतस्याः खल्वपि मानवीयमुखाकृत्यामेतावदधिक औपाधिकः प्रभावः सम्भविष्यतीति नासीन्मनोगोचरतां गतम् ।

× ×

भोजनं निर्वर्त्याहमलिन्दके समतिष्ठे । कुसुमलक्ष्मीरपि स्वकीयं भोजनादिकं भोजनोत्तरकालिकं च गृहगतं कृत्स्नमपि करणीयजातं निर्वर्त्य लवङ्गानादाय मामुपागच्छत् । सन्ध्याकालो व्यतिक्रान्त आसीत् । अस्माकं समयाख्यं यानयन्त्रं सम्प्रति रात्रिप्रदेशे न्यविशत । पुण्यपत्तनमुम्बापुरीमार्गे लोणावलातः कर्जतपर्यन्तं जी. आय्. पी. बाष्पगन्त्री यथा कञ्चित्कालं कृत्रिमपर्वतकन्दरासु निविशते कञ्चित्कालं च ताभ्यो बहिर्निष्पत्य धावति, तथैवेयं समयाख्या बाष्पगन्त्री खल्वपि कदाचिद् दिनप्रदेशे निविश्य कदाचिच्च रात्रिप्रदेशे निविश्याऽव्याहतं धावति । मानवीयजीवितस्यापि खल्वियमेवावस्थितिः । कदाचिद् दिनं, कदाचिद् रात्रिः । कदाचित्प्रकाशः, कदाचिदन्धकारः । कदाचिदुल्लासः, कदाचिद्दौर्मनस्यम् । कदाचिदाशा, कदाचिन्नैराश्यम् । बाल्यादारभ्य मरणवेलान्तं यावन्नहि कश्चिदप्येकान्ततः सुखितो वा दुःखितो वा तिष्ठति । भवतु नाम कश्चन सुमहान् वैभवाढ्यो नैवासौ कदापि दुःखानां, दुश्चिन्तानां, प्रतिकूलानुभूतीनां वा आखेटभावं प्रतिपत्स्यत इति न । तथैव भवतु नाम कश्चन सुमहान् दुर्गतो नैवासौ कदापि स्वजीवित आनन्दम्, उल्लासम्, आनु-

कूल्यानुभूतिं वा प्रतिपत्स्यत इत्यपि न। न खल्वात्यन्तिक-सुखाख्यमात्यन्तिकदुःखाख्यं वा वस्तु जगत्यस्मिन् जन्म लभते क्वापि। एतादृशि व्यतिकरे खल्वहमप्यालोचयम्—इयं कुसुम-लक्ष्मीर्ह्यनुत्तमसुखलाभ इव मदीयं जीवनमनुप्राप्ता मदीयस्य जीवनस्य खल्वान्तरिकतमेषु कक्षेषु निविशमानाऽऽस्ते, येन हि मदीये जीवनेऽभिनवं किमपि स्वर्गिकं सुखमवतीर्णमिवोपलक्ष्यते, कियन्तं कालमनन्ताभिरपूर्णताभिः परिपूर्णे मानवीये जीविते खल्वेतस्मिन् तद्वदेव स्थास्यति? नूनमधिगतेषु सुखक्षणेषु दुर्बलायते मानवहृदयम्। सुखितो जन्तुर्हृदयेनाऽशक्तो भवति। भीरु-र्भवति। दुःखनिबन्धना कल्पनाऽपि दुःसहा भवति सुखितस्य। स हि तेषां स्मरणमात्रेणाऽपि खल्वापादमस्तकं शिशिरायते। तस्मा-दनया विचारमालिकया मनसि स्पृष्टः सन्नहं खल्वप्यकम्पे। परं विग्रहवान् परिहार इवास्य भयस्य मम सम्मुखं समायाता कुसुम-लक्ष्मीः किञ्च सस्मितवदना प्रासारयल्लवङ्गकुलोपेतं स्वकीयं करतलम्। अहं द्वित्राँल्लवङ्गान् स्वकीये मुखेऽक्षिपम्। साऽप्ये-कामुपवेशनीमादाय सर्वथा मत्समक्षमेवोपाविशत्। तस्या मुख-मण्डले विद्यमानं सार्वकालिकं तन्मधुरस्मितं तथैवाखण्डं व्यराजत। परं यदा खल्वसौ मदीयं मुखमपश्यत्, तदा मिलनवेलायामप्यस्यां सर्वथा स्मितविहीनं, गाम्भीर्यविषादच्छायाभ्यामीषत्स्पृष्टं च तद् दृष्ट्वा सहसैव सा स्तम्भीभूतसकलगात्रा समजायत। परि-स्थितिं सम्यगवगन्तुं मम नेत्रयोः स्वनेत्रे निक्षिप्य सा कञ्चित्कालं निर्निमेषं व्यैक्षत। शब्दः खलु न तस्या मुखान्निरपतन्नापि च मम मुखात्। अहमपि स्वकीये नेत्रे तस्या नेत्राभ्यां नैवापासार-यम्। साऽपि निर्निमेषाऽहं खल्वपि निर्निमेषः। इत्थं प्रत्यैक्ष

यदसौ स्वनेत्रकिरणाश्रयेण ममान्तःकरणेऽवतीर्णा सती तत्र-त्यान् प्रत्येकं कोणान् विगाह्य वस्तुस्थितिं सम्यक्तया बोद्धुं प्रयतते। किञ्चित्कालानन्तरं नितान्तमात्मभावोपेतया वाचा सा शनकैः प्राब्रवीत्—"विकास ?"

"किमस्ति कुसुमलक्ष्मि ?" अहं शान्तेन वचसाऽभ्यदधाम्।

किमिदानीमपि खल्वावयोर्द्वयोर्मध्ये कश्चनावरोधस्तिष्ठति ? नह्येतस्मिन् क्षणे भवदीये मुखमण्डले किञ्चिदपि प्रसन्नतायाः परिस्फुरणं पश्यामि। किमेतेन वेदितव्यं भवति ?"

"ममापि पुरतः खल्वयमेव प्रश्नः। अहं खल्वप्येतदेव चिन्तयामि—यदा पुनरावयोर्मध्ये नहि कश्चन बाह्य आभ्यन्तरश्चाऽवरोधस्तिष्ठति, कस्मान्न तदा मम मुखे प्रसन्नतायाः किमपि परिस्फुरणं दृश्येतेति।" इदं वाक्यमहं सगाम्भीर्याभिनयं वक्तुमैच्छम्। परं प्रत्युत्स्फुटितेन मम हसितेन मदीयोऽभिनयः स खल्वन्तरायितः। नाहमात्मानमुच्चैर्हसितादशक्नवम् निवारयितुम्।

"अम्मो !" कुसुलक्ष्मीरप्युच्चैर्व्यहसत्। "एतत्तह्यभिलषति भवान्—अम् !" इति व्याहरन्ती सा स्वकीयाया उपवेशन्या उदतिष्ठत् किञ्च मामुपेत्य प्रसभं मम दक्षिणंकपोलं प्राणसत्। अवदच्चापि—"उच्यताम्। इदमेवाभ्यलष्यत न वा ?"

अहमवोचम्—"अतिमात्रं चपलाऽसि त्वम्। अतिमात्रं धृष्टापि च।"

× ×

प्रावर्धत रात्र्यन्धकारः। बेंगलूरनगरगतेषु राजमार्गेषु विद्युद्दीपानां प्रकाशः खल्वपि तीव्रः समजायत। नगरगतं

कृत्स्नमपि वातावरणं सामान्यतया शान्तमासीत् । राजमार्गेषु जनानां पादसञ्चारः खल्वपि विरलत्वमभजत । पुष्परथानां,[1] नगरयानानां, तुरङ्गयानानां[2] चापि स्वनो दिनगतनानाविधाऽऽक्रोशादिकस्याऽभावे खल्वतीव स्पष्टः समश्रूयत । परं तेषां स्वनानां मध्यवर्त्यन्तरं कालदृष्ट्या पर्याप्तमवर्धत । आवामुभावपि शयनसमयं परिज्ञाय शयनकक्षे प्राविशाव । सर्वथा स्निग्धो विद्युद्दीपप्रकाशः । स्वच्छः सुदीर्घश्च कक्षः । तत्र खल्वेक एव पल्यङ्कः । पल्यङ्के समास्तीर्णः सुमृदुलस्तूलसंस्तरः ।[3] तूलसंस्तरोपरि प्रसारितः सुविशदं धौतः श्वेतोत्तरप्रच्छदः ।[4] पादतलस्थाने लघुतरं प्रावरणवस्त्रम् । किञ्च शिरःस्थाने सार्धं सार्धमुपकल्पिते द्वे उपधाने । कुड्येषु चित्रफलकादिकस्य सर्वस्यापि सर्वथाऽभावः ।

अहमीषद्दौर्जन्यादनपेतेन वचसा कुसुमलक्ष्मीमपृच्छम्—"कस्य कृते खल्वेष पल्यङ्कः ? मम कृते वा तव कृते वा ?"

"कुतः ?…" कुसुमलक्ष्मीस्तत्कक्षप्रवेशसमकालमेव सर्वथा मनोभवविकारविद्युद्धारासञ्चारावेगविवशा समजायत । विलक्षणो वेपथुस्तदीयेषु गात्रेषु तीव्रं सञ्चचार । सा मम कण्ठे कमलनालसवर्णां स्वभुजलतामर्पयित्वा सकम्पस्खलितेन गद्गदभूयिष्ठेन च वचसा मामभ्यदधात्—"इदमपि प्रष्टव्यं भवति किम् ?"

---

१. पुष्परथः=मोटरकार। २. तुरङ्गयानम्='टांगा' इति भाषायाम्। ३. तूलसंस्तरः='गद्दा' इति भाषायाम् । ४. उत्तरप्रच्छदः=छादनपटः। 'चादर' इति भाषायाम् ।

## नवमः समुच्छ्वासः ।

नेदं वक्तव्यमपेक्षते यद् यादृशं तत्सायंकालिकं स्नानं, भोजनं च दिव्यमभवत्, तादृशं तद्रात्रिकालिकं शयनं खल्वपि दिव्यमेवाऽभवत् । सुचिरं मनस्येव संवर्धिता मानवीया आकाङ्क्षाः प्रथमतो यस्यां रात्रावनायासं पूर्णतां गच्छन्ति, कुतो न 'दिव्या' भवेत् सा रात्रिः ?

तस्यां रात्रौ किं किमावामकरवावेति प्रष्टव्ये, किं किं नाकरवावेति पृच्छ्येत चेद् भद्रतरं भवेत् ।

किं नाकरवाव ? अस्य प्रश्नस्यैकमात्रं यदुत्तरमहं दित्सामि तदेतदेव यत् पार्थिवैस्तत्त्वैर्विनिर्मितयोः खल्वेतयोः स्त्रीपुरुषदेहयोः परस्परस्याऽत्यन्तं समीपमागतयोः सतोर्यासां पार्थिवानुभूतीनां परमन्तं यावत् साधारणतया लोको गच्छति, जिगमिषति, गन्तुं वा पारयति, न तावत्पर्यन्तमावां प्रायतावहि गन्तुम् ।

कस्मिन्नपि वनप्रान्तगते लतावृन्ते वा कस्मिन्नप्युद्यानवनप्रान्तगते केदारिकाक्षुपवृन्ते वा स्थितस्य किञ्च विष्वग् अम्लानं स्मितहसितं विकिरतः कुसुमस्य सौरभमेकाधिकारितया स्वायत्तीकर्तुंकामः सन् यदि कश्चनापि जनस्तत्कुसुमं वृन्तविच्युतं कुर्याद् यद्वा तदीयानि सुकुमाराण्यङ्गानि निर्दयं परिमर्दयेत्, तर्हि तद् वीक्ष्यैव घोरतरेण हाहानादेन परिपूरितं जायते मे हृदयम् । ईदृशः खल्वहमेतामुद्यानवनललितकुसुमसश्रीकां कुसुमलक्ष्मीं प्रति

तादृशं निर्घृणमसौकुमार्यपूर्णं च किमप्याचरितुं शक्नोमि स्म किम् ? अतिमात्रं मधुरेणोपचारेण मनोभवविकाराखेटभावमुपगतां तामहं तस्माद् व्यापारान्निवार्य प्रत्यबोधयम्—नेदमुचितं यदेतेषामत्यर्थमुपद्रवकारिणां समुन्नद्धानां च मनोविकाराणामौद्धत्यं प्रति सशीर्षमस्माभिः प्रणिपातो विधीयते । तथा किमपि विधातव्यं यथा खल्विमे मनोविकाराः स्वयमेव सशीर्षं प्रणिपातमस्मान्प्रति विदधीरन् । तदेव खलु शक्तिशालितायाः, धीरत्वस्य च लक्षणमिति ।

यं वयं स्निह्याम, आद्रियामहे, पूजयामश्च, तमेव कथमशक्त्या, मनोदौर्बल्येन वाऽभिभूतं वयमर्हामो वीक्षितुम् ? इयं हि नितरां दुःसहा, दुराराध्या च कल्पना यदस्माकं पूजाभाजनमेव जनो दौर्बल्यदनुजेन करालदंष्ट्रेन कवलितः स्यात् । तस्मान्नाहं कुसुमलक्ष्मीं दौर्बल्याभिभूतां वीक्षितुमसहे । किञ्च न्यवारयमेव तां तादृशदौर्बल्याभिभवजनितात् पराजयात् ।

इदमेव कारणं यद् यदाऽऽवां प्रत्यूषे तस्माच्छयनकक्षाद् बहिरागच्छाव, तदाऽस्माकमिदं शयनं खल्वपि किमप्यसामान्यम्, इतरजनकल्पनाप्रसरातीतं, दिव्यं चाभवदित्यन्वभवाव ।

निर्वर्तितानि नैत्यिकानि । चित्तं सर्वथा प्रफुल्लमासीत् । समीरणः खल्वपि प्रफुल्लतावर्धक एवाऽसरत् । कुसुमलक्ष्म्या ओष्ठयोर्विलसत्तदपूर्वं स्मितमिदानीन्तनं विलोक्य सात्त्विक्या, पावनया च कयाचिदपि भावनया परिपूर्णमभवन्मदीयमन्तःकरणम् ।

उभावप्यावां कस्यामपि सर्वथाऽनिर्वचनीयायां सन्तृप्तावस्थायामात्मानावन्वभवाव । नैकान्प्रातःकालानहं स्वकीये जीवने-

ऽपश्यम् । परं यं प्रातःकालमहमद्याऽपश्यम्, लोकोत्तरः खल्वासीत्स प्रातःकालः। किञ्चैतस्य लोकोत्तरप्रातःकालस्य पृष्ठभूम्यां यच्चित्रं कुसुमलक्ष्म्या मम नेत्रयोः पुरस्तादवतीर्णमभवत्, तदपि कियच्चारु कियच्च लोकोत्तरं भवेदिति शक्नुवन्ति भवन्तः सर्वथा लघुनोपायेन विज्ञातुम् ।

× ×

अथाऽऽवयोः सम्मुखं नूत्न एव खल्वेकः प्रश्नः समुपातिष्ठत —श्रीरामपुरं गच्छेयम् न वा गच्छेयम्, गच्छेयमेव तर्हि किं विदध्याम् स्वकीयस्य वस्तुजातस्येत्येवञ्जातीयकः। अपि खल्वहं तत्सर्वं कुसुमलक्ष्म्या आवसथ एव संस्थाप्य गच्छामि तर्हि श्रीधरमहाभागेन 'क्व भवतो वस्तुजातमि'ति पृष्टः किम्प्रतिब्रूयाम् ? अपि खल्वहं तत्सर्वमात्मना साकमेव श्रीरामपुरं नयामि तर्हि कुसुमलक्ष्म्या आवसथं प्रति निवर्तने सुदूरापास्ते सति किं समाचरेयम् ? अयमेकः। द्वितीयः खल्वपि। श्रीधरमहाभागेन 'क्व ह्यो भवान् रात्रावतिष्ठदि'ति पृष्टः किं प्रतिब्रूयाम् ? किं सर्वमपि यथाघटितं निवेदयेयम् ? किं निवेदयेयम् रात्रावहं कुसुमलक्ष्म्या आवसथेऽतिष्ठमिति ? एतेन तस्य मनसि कश्चित् सन्देहो मम कुसुलक्ष्म्याश्च विषय उदियात् तर्हि किं विधातव्यम् ? नाहं चेद् यथाघटितं निवेदयामि तर्हि किमनृतं ब्रूयाम् ? परमनृतं—तच्चापि मद्विधजनोदितं—कियत्कालं प्रच्छादितं स्थास्यति ? एवं खल्वभवदियमुभयतःपाशा रज्जुः ।

अथ परीक्षितुं कुसुमलक्ष्मीमहमवोचम्—"ब्रूहि तावत् 'क्व भवान् रात्रावतिष्ठदि'ति श्रीधरमहाभागेन पृष्टः किमहं प्रतिब्रूयाम् ?"

सा प्रश्नमेतमाकर्ण्येषदातङ्किता समभवत् । अब्रवीत्—"हन्त, नाहं व्यचिन्तयमस्य प्रश्नस्य विषये किञ्चिदपि । अथ किं भवान् प्रतिवक्ष्यति ? यावानेवोदारधीर्मम जनकस्तावानेव खल्वनुदारधीर्मम पितृव्यपादः । यद्यसौ जानीयाद् भवान् ह्यो रात्रौ ममावसथे न्यवसत् किञ्चैवं महर्षिभिः प्रणीतानामत्युग्र-सद्वृत्तनिबन्धनानां नियमानां परिपालनेऽपि शैथिल्यं समाचर-दिति तर्हि ध्रुवं स जमदग्ने रूपं धारयिष्यति । असौ ह्यार्षनिय-मानां प्रतिपालनविषये नितरां कठोरः । ईषदपि व्यतिक्रमं तेषां नियमानां नासौ सोढुं क्षमः । परमेश्वर एव जानाति किमिदानीं प्रतिपत्स्यत इति ।"

कुसुमलक्ष्मीः सर्वथा हतत्विडिव संवृत्ताऽऽसीत् । तस्माद् व्यसनाद्विमोचनस्य तस्याः सर्वोऽपि भारः सम्प्रति मम स्कन्धयोः समापतत् । किञ्चिद्विहस्याहमवोचम्—"कस्मादेवं हतप्रतिभेव संवर्तसे ? ह्यः केङ्कर्याश्रमे त्वमेव तावदवोचः 'सर्वविधा आशङ्काः प्रत्याशङ्का लोकभयमित्यादिकं परित्यज्य भवता सह समायास्या-म्यहमि'ति । इदानीं कि सञ्जातं तस्य वचनस्य ? कस्मादीदृशीं कातरतां प्रदर्शयसि ? किं सद्वृत्तगतेन दार्ढ्येनोपेता त्वं श्रीधर-महाभागं नैवं वक्तुं पारयसि यदिदानीमहं विकासस्य जीवित-सहचारिणी संवृत्तास्मीति ?"

एतच्छ्रवणसमकालमेव तस्याः कृत्स्नमप्यधैर्यं, मानसिक-श्चातङ्कः सुदूरं प्रपलायितौ । महतीमिव शक्तिं साऽध्यगच्छत् । अब्रवीच्चापि—"नूनं तावन्मात्रेण सद्वृत्तगतेन दार्ढ्येन तु मयि भवितव्यमेव । अतीव शोभनं कृतमेतत्स्मारयित्वा । अथाहं

सर्वथाऽकुतोभया व्यवहरिष्यामि । भवदीयस्यैतस्योपदेशस्य कृते बहवो धन्यवादाः ।"

अस्मिन्नेवान्तरे द्वारदेशे कस्यापि कपाटघट्टनध्वनिरश्रूयत। क एष भविष्यतीति न खल्वेकपदे कुसुमलक्ष्मीर्निश्चेतुं शशाक। मुहूर्त्तं यावत् पुनरातङ्कस्यैका सूक्ष्मा लहरी तस्या मुखमण्डलं पर्यावृणोत् । परं यथा कथञ्चिद् आत्मानं पर्यवस्थाप्य गत्वा चापि द्वारदेशं सा द्वारमपावृणोत् ।

एष तर्हि श्रीधरमहाभाग एवासीत् । असावभ्यन्तरं समायात् । कुसुमलक्ष्मीः प्राणमत् । श्रीधरमहाभागस्तां प्रत्याभाष्य मम पार्श्ववर्तिन्यामेवोपवेशन्यां खल्वेकस्यां समुपाविशत् । कुसुमलक्ष्मीरपृच्छत्—"अपि पितृव्यपाद, ग्रहीष्यति न वा भवानपि ब्रह्मकषायम् ?"

श्रीधरमहाभागः प्रत्यवोचत्—"नास्त्यपेक्षितः कषायः ।"

तस्य पादावपीडयेताम् । कञ्चित्कालं स स्वकीयौ पादौ संवाहयन् आस्त । तदनु स कुसुमलक्ष्मीमपृच्छत्—"ह्यः पितृपादः प्रत्यावर्तत किं बहिष्टात् ?"

"नैव तावत् । पार्श्ववर्तिनो ग्रामान् प्रतिष्ठन्नसौ मां व्यज्ञापयत् तस्य प्रतिनिवर्तने किमपि विलम्बो भविष्यतीति ।" कुसुमलक्ष्मीः प्राब्रवीत् ।

कञ्चित्कालं स ऊर्ध्वमावसथपटलाभिमुखं तदेकदृष्टयाऽपश्यत् । किमप्यसौ विचिन्तयतीति प्रत्यैयत। मुखमण्डलं सर्वथा विचारशून्यम् । तस्याऽऽकृतिगता रेखा विलोक्य तदन्तःकरणगतं नैवाऽशक्यत किमप्यनुमातुम् । तदनु स ममाभिमुखमवा-

लोकयत् । अपृच्छत् खल्वपि—"किं कुसुमलक्ष्म्या सहैव ह्योऽत्र समागच्छद् भवानपि ?"

"बाढम् ! अभवत् खलु तादृश एव संयोगः ।" अहं प्रत्यवोचम् ।

"अद्य यशवन्तपुरं प्रति गन्तव्यमस्ति ।"

"ओम् । जानामि । ह्यो विद्याधरमहाभागस्तथा समशब्दयत् ।"

अत्रान्तरे कुसुमलक्ष्मीः समुपानयद् ब्रह्मकषायम् । अहं ब्रह्मकषायमास्वादयन् व्यचिन्तयम् यदि श्रीधरमहाभागः कारणात्कस्मादपि रुष्टः सञ्जायेत, केन विधिना तर्ह्यसौ प्रतिभटनीय इति । कुसुमलक्ष्मीः सर्वथा तूष्णीं स्थिताऽऽसीत् । सापि गभीरतरे विचारे कस्मिन्नपि निमग्नाऽऽसीज्जातु । परं सुदैववशाद् नहि कञ्चनाऽपि दुष्प्रत्याशितं प्रश्नमपृच्छत् श्रीधरमहाभागः । तथापि मनसि कश्चनापूर्व एव खल्वविद्यत सङ्कोचः । सर्वथा निष्क्रियमेव समपद्यत मस्तिष्कं तावत् ।

अहमालोचयम् ह्यो रात्रावावां सद्वृत्तविरुद्धं, समाजविरुद्धं वा कर्म नैव किमपि समाचराव । तादवस्थ्येऽपि खल्विदानीमावामेवङ्कारं मानसिकमस्वास्थ्यमभजावहि । यदि तादृशं किमपि सद्वृत्तविरुद्धं कर्म समाचरितमभविष्यदावाभ्यां तर्हि सम्प्रत्यावयोर्मानसिकस्यास्वास्थ्यस्य काचिदियत्तैव नाभविष्यद् इति । 'सहसा विदधीत न क्रियामविवेकः परमापदां पदमि'ति यद् भारविरवदत्, तद् भेषजानां भेषजमिति शक्यते लघुनोपायेन वक्तुम् । हन्त, कीदृशमर्थगौरवोपेतं प्रतिभाति स्मेदानीं भारवेरिदं वचनम् !

अवसिते सति ब्रह्मकषायग्रहणे श्रीधरमहाभागः कुसुमलक्ष्मीमवोचत्—"वरम् । वत्से, अहमेतं महाभागमात्मना सह नयामीदानीम् ।"

"वरम् ।" कुसुमलक्ष्मीरभ्यदधात् ।

आवां बहिरागच्छाव । कुसुमलक्ष्मीरपि द्वारदेशं यावत्समागच्छत् । अतिमात्रमर्थगर्भया दृष्ट्या मामपश्यत् सा । अहमभ्यदधाम्—"वरम् । बहवो धन्यवादाः । नमस्ते ।"

"किन्निबन्धनाः खल्विमे धन्यवादालापाः ?" सा ।

"भवत्सुरुचिरातिथ्यनिबन्धनाः ।" अहम् ।

× ×

नगरयानप्रस्थानके द्राघीयस्यासीद् जनानां प्रतीक्षापंक्तिः । तां विलोक्य भृशं चिन्ताकुलोऽभूत् श्रीधरमहाभागः । चिराय कुत्राप्युत्तम्भनं बहुकष्टकरं भवति तस्य । दिष्ट्या द्वे नगरयाने युगपत् समागच्छताम् तत्रावयोर्गमनसमकालमेव । किञ्चालभ्यत स्थानं निषदनाय लघुनोपायेन द्वितीये नगरयाने । यदा खल्वावां यशवन्तपुरवर्तिन्यार्यसमाजे प्राविशाव, तदा खल्वार्यसामाजिकी सन्ध्या समाप्ता सती ह्यग्निहोत्रस्याप्यर्धं समाप्तमासीत् । तत्रोपस्थिता जनाः प्रायेण पञ्चनदीया हिन्दीभाषिका वाऽऽसन् । अल्पीयांस एव जना अभवँस्तत्रत्या मूलवासिनः । आर्यसमाजस्य यत्रापि समजायत विस्तारस्तत्र सर्वत्रेदमेव भवतां दृष्टिगोचरतां यास्यति । तद्देशीयेष्वपि जनेष्वार्यसमाजस्य किञ्चिन्मात्रायां प्रसारोऽवश्यम्भवति । परमार्यसामाजिक्या विचारधारायाः सर्वाङ्गीणमात्मसात्करणं पञ्चनदीयानां किञ्चोत्तरप्रदेशीयानामेव ललाटपट्टे लिखितमिव प्रतिभाति । अत्रापि खल्वार्यसमाजस्य

प्रधानः कश्चन पञ्चनदीय एवासीत् । असौ यज्ञकुण्डस्य समीपमासीन आहुतीरावर्जयति स्म । आवामवलोक्य मन्त्रानुच्चारयन्नेवावां हस्तसङ्केतेन नमश्चकार । आवां न्यषीदाव । अचिरादेव समाप्यताऽयं कार्यक्रमः । द्वित्राणि सम्मिलितान्यार्यसामाजिकानि भजनान्यभूवन् । आरतिभजनमभूद्—'ओ३म् जय जगदीश हरे' इति । समाप्यत चापि सत्सङ्गः । अथ ममाऽऽसीद् भाषितव्यम् । श्रीधरमहाभागो मां तान् सर्वान् पर्यचाययत् । तत्र चत्वारिंशद् वा पञ्चाशद् वा जना अनुमानतोऽभूवन् । विंशतिर्वा पञ्चविंशतिर्वा निमेषा मम भाषणस्य समयः । आर्यसामाजिकानामभिरुचिं लक्ष्यीकृत्य विहितं, देशगतवर्तमानदशाप्रदर्शनपरं, भाव्यभ्युदयप्रतिपादनात्मकं, प्रवर्तमानराजकीयप्रयत्नगतविश्वासप्रकटननिबन्धनं तदासीन्मदीयं भाषणम् । न तावद् बहुमनोहरं नापि च बहुग्लानिकरम् । नातिनीरसं नापि चातिसरसम् । सर्वथा साधारणमासीत् । यथा कथञ्चित् प्रदत्तस्य समयस्याऽतिवाहनमेव तावदासीन्मनीषितम् !

समाप्ते भाषणे तत्रोपस्थितैर्महानुभावैः सह मम परिचयः श्रीधरमहाभागेन कारितः । एको महानुभावो, न वेद्मि कं हिन्दीभाषिक्षेत्रं जनुषा समबध्नात्, तत्राशनालयं खल्वेकं चालयति स्म । स आवां स्वकीयमशनालयमनयत् । अशनालयः किमासीत् कान्दविकस्य[1] कस्याप्यापणमासीत् । काश्चित्कुण्डलिनीः[2] कानिचिच्चान्यानि मिष्टलवणखाद्यकानि पुरतो न्यास्यत् । अब्रवीच्चा-

---

१. कान्दविकः='हलवाई' इति भाषायाम् ।

२. कुण्डलिनी='जलेबी' इति भाषायाम् ।

पि—"क्षम्यताम् । भवादृशानां विदुषां प्रतिपूजनायेदमेव किञ्चित्प्रस्तोतुं शक्नुमः ।"

असावबिभ्यद् दानसंग्रहार्थी जात्वहमेतस्मिन्नगरे समायातोऽस्मीति । श्रूयते चापि यः कश्चन बहिष्टादत्र समागच्छत्, स खल्वत्रत्यान् जनान् कस्यापि निकायस्य कृते दानमेवाऽयाचतेति । एते च जना दानं दायं दायं नितान्तं परिक्लेशमन्वभूवन्निति । मामपि खल्वेष महानुभावस्तेषामेवान्यतमं कञ्चनोदपश्यत् ।

भवतु । तत्र किञ्चिद्रसनासौहित्यमुपकल्प्यावामन्यतरस्यैकस्य महानुभावस्य गृहमगच्छाव । असौ गृहे नासीत् । तस्यैका दुहिता तत्रावर्तत, या हि किमप्यांग्लभाषागतं दैनिकं समाचारपत्रं पठति स्म । श्रीधरमहाभागस्तया सहांग्लभाषायामेवालपितुमारेभे । सापि सर्वथा निष्प्रत्यूहमनायासं चांग्लभाषायां प्रत्यभाषत । अन्त्रान्तरे तस्या जननी तत्रोपातिष्ठत । साप्यांग्लभाषायामेव वार्तालापं प्रारभत । श्रीधरमहाभागस्तामपृच्छत्—"भवती भवदीयां दुहितरं खल्वेतां हिन्दीभाषामपि पाठयति न वा ?"

साऽब्रवीत्—"एनामेव पृच्छतु भवान् ।"

सा कन्याऽब्रवीत्—"पठामि खलु तावद् हिन्दीभाषामपि । अत्रावलोक्यताम् । हिन्दीभाषापुस्तकानि खल्वेतानि ह्य एव परिक्रीतानि ।"

श्रीधरमहाभागोऽभ्यदधात्—"अवश्यम् । अवश्यं पठ वत्से । अन्यथा ह्यांग्लभाषाया एव महापङ्के निमग्ना स्थास्यसि ।"

अस्मिन्नेवान्तरे तस्याः कन्याया जनकोऽपि बहिष्टात् समागच्छत् ।

"नमस्ते ।" आगमनसमकालमेवातिमात्रं प्रसन्नवदनः सन्नसौ सोल्लासमेवं श्रीधरमहाभागमभ्यनन्दत् ।

"अद्याहं भवत्सकाशे भवत एव महाराष्ट्रस्य निवासिनमेकं महाभागं समानीतवानस्मि । एष हि पण्डितोपाह्वो विकासनामा महाभागः ।" श्रीधरमहाभागस्तं मां पर्यचाययत् ।

"असं कां ?" (अप्येवम् ?) स मामभि पश्यन्नवदत् ।

तदनन्तरं तस्य मुखान्ममोपरि प्रश्नानां धारासम्पात इवाऽपतत् । एतावतः प्रश्नान् इदानीं यावद् यावत्यपि जीविते नहि कश्चनाप्यन्यतरो मामपृच्छत् । अन्ततश्चाऽब्रवीत्—"एवं नाम किल तत् । क्वाप्येकत्र स्थित्वा कार्यसमाचरणं नैव भवानभिनन्दतीति । नैव किम् ?"

एतदाकर्ण्य किमप्यहं विचिकित्सया दोलायितचित्तः समभूवम् । किं प्रतिब्रूयाम् ? किं खल्वभिनन्दामि किं च खलु नाभिनन्दामीत्यवधारणमपि क्लिष्टः पन्था इति तदानीमवाबुध्ये। भवतु । अहं प्रत्यवोचम्—"नहि कश्चनेतोऽपि तादृशः कुलक्करः[1] सम्प्राप्तो, योह्यत्यन्ताय मां क्वाप्येकस्मिन्नेव स्थाने बध्नीयात्। किञ्चेतोऽपि छरण्डत्वमेव[2] मदीयम् । यावत्कालमहं छरण्डस्तावत्कालमेव देशदर्शनं, परिभ्रमणं, यात्रादिकं च सम्भवितुमलम्। तदनन्तरं तु क्वाप्येकत्र कस्मिन्नपि कुलक्करे लाङ्गूलबन्धनं तावद् ध्रुवमेव ।

मदीयमेतत्प्रतिवचनं श्रुत्वा स उच्चैरहसत् । आवामुभावपि

---

१. कुलक्करः='खूँटा' इति भाषायाम् ।

२. छरण्डः='छड़ा' इति भाषायाम् । अकृतदारपरिग्रहो युवेति यावत् ।

मराठीभाषायां वार्तालापमकरवाव। तावता, श्रीधरमहाभागो नहि कमप्यावयोर्वार्तालापांशं सम्यगबुध्यत। तथाकारं हसिते सति तस्मिन् गृहपतौ स किञ्चिद् व्यस्मयत। सोऽपृच्छत्—"किं वृत्तम्? भवन्तौ तावत् तादृश्यां भाषायां वार्तालापं कुरुतो, यस्या लेशमात्रमपि मम बुद्धौ नावतरति।"

स गृहपतिर्भूयोऽप्यहसत्। अब्रवीच्चापि—"ओम् श्रीमन्। नैव किमपि भवद्बुद्धाववतरेत् तदेव समीचीनम्। आवां किमप्यौपह्वरिकमालपाव:।"[1]

तत्प्रयुक्तेनानेनौपह्वरिकशब्देन तावदवागिव खल्वहमभवम्। किमेतेनासीत्तदीयमभिप्रेतम्?

भवतु। श्रीधरमहाभागस्तावत् समीपस्थस्य समाचारपत्रस्यैकस्य पठने दत्तचित्तोऽभवत्। स गृहपतिः पुनरपृच्छन्माम्—"वरम्। इदन्तावदुच्यताम्। एतद् बेंगलूरनगरं कीदृक् प्रतिभाति?"

"शोभनं प्रतिभाति।"

"भवान् व्यलोकयत् किम्?"

"ओम्। किञ्चित्तु व्यलोकयमेव।"

"नैव कार्त्स्न्येन व्यलोकयदितोऽपि?"

"नैव खलु।"

"यदि पुष्परथेन नीत्वा कृत्स्नमपि नगरं श्रीमन्तं वयं दर्शयेम तर्हि किमभिनन्दिष्यति भवाँस्तत्?"

"अतिमात्रमभिनन्दिष्यामि। नात्र सन्देहः। परं श्रीधरमहा-

---

१. किमप्यौपह्वरिकम्='Something private' इत्यांग्लभाषा।

भागोऽपि पृच्छ्यताम् ।"

अत्रान्तरे गृहपत्नी चीनमृत्स्थालिकायां खल्वेकस्यां कांश्चित्फलानां खण्डान्, कानिचित्कदलीफलानि, कांश्चित् त्वक्सुगन्धफलफक्किका:[1] कांश्चिच्च ताम्रभण्टाकीफलानां खण्डानाधाय तत्रोपायात् । कन्या चापि चीनमृत्स्थालिकायामन्यस्यां कांश्चित् सम्भृष्टाः सलवणाः काकचञ्चुफलमज्जाः[2] समानयत् । वयं सर्वे वर्तुललघुस्तम्भफलकस्य खल्वेकस्य समन्तात् स्वकीया उपवेशनीः समाकृष्योपाविशाम । गृहपतिरब्रवीत्—"गृह्यताम् तावत् ।"

फलान्यालोक्य मम प्रसन्नताया इयत्ता नासीत् । लवणाः काकचञ्चुफलमज्जाः खल्वपि भृशमरूरुचन् । तथात्वेऽपि तदा किञ्चित् सङ्कोचमन्वभवम्, यदा गृहपतिः काकचञ्चुफलमज्जा अतिमात्रमहं भक्षयामीति विलोक्य भूयोप्येकां तत्परिपूर्णां चीनमृत्स्थालिकामानेतुमादिशत् । किञ्चित्कालानन्तरं कामरूपिकाकषायः समागतः ।

श्रीधरमहाभागो गृहपतिमब्रवीत्—"भवान् प्रभूतमिव भोजयत्येनं महाभागम् । इदानीमेवार्यसमाजप्रधानस्य गृहेऽपि माध्याह्निकं भोजनं विधातव्यमस्ति ।"

"अये, किमेतेन भवति । तत्रापि भोक्ष्यते । अस्माकं गृहे तु सम्यक्तया भुङ्क्ताम् नाम । नेदं भोजनमिति वक्तुमलम् ।"

अहं व्यहसम् । अहं श्रीधरमहाभागमपृच्छम्—"वत्स ।

---

१. 'संतरे की फाड़ियाँ' इति भाषायाम् ।

२. 'काजू की गिरियाँ' इति भाषायाम् ।

एतत्तावन्निर्दिशतु भवान् एकस्मिन् पर्याये कति रोटिका भक्षयतीति ?"

सोऽब्रवीत्—"महता प्रयत्नेन तिस्रः ।"

तदा खल्वहं स्वजीवितोदन्तमेकमश्रावयम् । स चैवम्—तदानीं वयं महाविद्यालये ह्यपठाम । द्वयोर्मासयोर्ग्रीष्मकालिको दीर्घावकाश आसीत् । अहमन्यश्चैकः सतीर्थ्यो मिलित्वा पद्भ्यां ग्रामाद् ग्रामान्तरं पर्यटनस्य कार्यक्रममवाधारयाव । आवां प्रत्यूषे सर्वथा चतुर्वादनवेलायामुत्थाय निरपताव किञ्च सूर्योदय-वेलां यावद् ग्रामान्तरं सम्प्राप्नुव । तत्र कमपि ग्राममुख्यावसथं गत्वा यावन्मध्याह्नं न्यवसाव । आतिथ्यादिकं चालभावहि । मध्याह्नावसाने तस्माद् ग्रामादन्यतरं ग्राममगच्छाव । तत्रापि ग्राममुख्यस्य कस्याप्यावसथे खल्वातिथ्यमगृह्णीव । रात्रौ ग्रामस्थानां सभायां प्रवचनं कृत्वा तत्रैवाशयीवहि । प्रत्यूषे भूयोऽपि चतुर्वादनवेलायामग्रिमतरस्य ग्रामस्य पन्थानं स्वीच-कृवहे । एवं पादयात्रामातिष्ठन्तौ हरिद्वारतो मुजफ्फरनगरं यावत् समागच्छाव । मुजफ्फरनगरमासीत् पुटभेदनम् ।[1] ग्रामेषु खल्वावां लघुनोपायेन कस्यापि ग्राममुख्यस्यावसथमन्वैष्याव ; परमत्र कं कुत्र चान्विष्येव ? परस्ताच्च, पुटभेदनवासिनां ग्रामवासिनां वृत्तिष्वपि विशेषो वर्तते न वा ? ग्रामवासिनां दृष्ट्यामावां प्रतिष्ठितावास्व । एतावता, त आवयोरातिथ्याचरणे सर्वथा समतुष्यन् । दुर्गततरोऽपि कृषीवलः खल्वावयोस्तत्समीपं सम्प्राप्तयोः सतोः सबहुमानमावां स्वकीयायां खट्वायामुपा-

१. पुटभेदनम्='Town' इत्यांग्लभाषायाम् ।

वेशयत् । आगमनप्रयोजनमपृच्छत् । किञ्चावां तस्यैवावसथे भोजनं करवावहै इत्येवमन्वरुणदपि । आवयोस्तदातिथ्यं स्वीकृतवतोः सतोस्तद्गृहस्त्रियस्तासामहोभाग्यममन्वत । परं पुटभेदने कुतः सम्भवेदेतत्सर्वम् ? तत्र खल्वस्मादृशाः पठिताः धौतधवलाम्बरधारिणश्च जना यत्र तत्र पर्यटाट्यन्ते । कः कं प्रतिष्ठितं मन्वीत कश्च कस्यातिथ्यं समाचरेत् ? एतावता, पुटभेदने खल्वस्मिन् स्वकीयस्यातिथेयस्यान्वेषणं प्रचुरक्लेशकरं संवृत्तम् ।

मुजफ्फरनगरस्य सीम्नि प्रवेशानन्तरं क्व गच्छेवेत्ययमेव प्रश्नः समुद्भूतः । नैव कस्याप्यातिथ्यं स्वीकुर्वीवहि किन्त्र स्वेनैव द्रव्यव्ययेन कमप्याधावं[1] गत्वाऽश्नीयाव घनच्छायस्य च कस्यापि तरोरधस्ताद् मध्याह्नसमयमतिवाहयेवेति प्रथमम-वाधारयाव । परं मम सतीर्थ्य उपादिशद् यावच्छक्यमावाभ्यां स्वसार्धमानीतं द्रव्यं नैव स्प्रष्टव्यमिति । यदा सर्वविधान् यत्ना-नास्थाय पराजयेवहि ह्यभिलषितं च नैवोपनमेत्, तदा स्वसार्ध-मानीतं द्रव्यं तु विद्यत एव । प्रयतनात् प्रागेव कस्मात् स्वकीयः पराजयोऽभ्युपगन्तव्यः ? इति । मह्यं तस्याऽयमुपदेशो भृशमरू-रुचत् ।

आवां कियद्दूरं पुरतोऽसर्पाव, यदा कश्चन खद्दरवस्त्रधारी जनः पुरस्तादागच्छन् अदृश्यत । आवां तमार्यसमाजस्य प्रवृत्ति-मपृच्छाव । आवामपि खद्दरवस्त्रधारिणावेवास्व किञ्च प्रत्यक्षम्

---

१. आधावः—औत्तराहो भोजनापणः । 'ढाबा' इति भाषायाम् । आ समन्ताद् धावन्त्येनं भोजनार्थिन इत्येवं वाऽन्यथा वा यथा कथञ्चिद् व्युत्पाद्यः खल्वेष शब्दः ।

आगन्तुकौ प्रत्यैयावहि। सोऽत्यन्तं सानुक्रोशतया खल्वावयोरत्रागमनकारणमजिज्ञासत्। आवामत्र यात्रार्थिनौ समागच्छावेति ज्ञाते सति स आवां स्वकीय आवसथ एव न्यवासयत्। तदानीं स तत्रैकल एवाऽऽसीत्। स्वकीयं भृत्यमुक्त्वा स आवयोर्भोजनस्य प्रबन्धम् आधावे खल्वेकस्मिन् अकारयत्। तेषु दिवसेषु द्वाभ्यामेवाणकाभ्यामुदरपूरं भोजनमलभ्यत। आवामुभावपि परिश्रान्तावेवास्व। बुभुक्षाऽपि प्रबलाऽऽसीत्। आधाविकः परिवेषण्यौ द्वौ तत्रोपापादयत्। आवां भोक्तुं प्रावर्तावहि। असौ द्वित्राः पोलिकाः खल्वङ्गारेष्वपचिष्यद् आवयोश्च परिवेषण्योरुद्धरणकेन[1] समुद्धृत्य न्यपातयिष्यत्। सार्द्धं निमेषेणैवावां ताः पोलिका उदरस्था अकरवाव। विशुद्धेन घृतेनोत्कृष्टेन च हिङ्गुना संस्कृतः स माषसूपः, सा खल्वलाब्वा भाजी, आम्रसन्धानितकस्य ता द्वित्राः फक्किकाः किञ्च हरितमरिचस्य तत्सन्धानितकम्। सौहित्यस्य परा काष्ठा समजायत। सूपास्वादस्य विषये तु किं वक्तव्यम्? एकैका रोटिका ततः समागच्छति तत्समकालमेव चेतो विलुप्यते। नैव शक्ष्यति भवान् अनुमातुं कति रोटिकास्तस्मिन्नहनि खल्वावामभक्षयावेति। आवामुभौ मिलित्वा वराकस्य तस्याधाविकस्य चतुश्चत्वारिंशद् रोटिका उदरसादकुर्वहि। द्वाविंशती रोटिकाः खल्वेकैकेन।

मदीयामिमां कथां श्रुत्वा स गृहपतिरवदत्—"तर्हि भोजनार्थं खल्वेकदा भवताऽस्मद्गृहेऽप्यवश्यमागन्तव्यम्।"

श्रीधरमहाभागोऽब्रवीत्—"भवद्गृहेऽपि खल्वेकदा समा-

---

१. उद्धरणकम्—चिम्मट्टकः। 'चिमटा' इति भाषायाम्।

यास्यति भोजनार्थम् ।"

एतदुक्त्वा स स्वकीयं मणिबन्धवेलायन्त्रमपश्यत् । अथ चलितव्यं नामेदानीमिति मामुपादिशच्चापि ।

आवामुदतिष्ठाव ।

गृहपतिरब्रवीत्—"बरंय् पंडितमहाराज, आज येणार न संध्याकाळ्ठीं आमच्याकडे—आमच्या बरोबर शहरांत भटका-यला म्हणून ?" (वरम् । पण्डितमहाभाग, अद्यागमिष्यति न वा सन्ध्यासमयेऽस्मत्समीपमस्माभिः सह नगरे पर्यटनार्थमिति ?)

किमहं स्वयं प्रतिब्रूयाम् ? श्रीधरमहाभागस्यातिथिरहम् । यथा तेन निर्देष्टव्यम्, तथैव मया समाचरितव्यम् । तस्मादस्य प्रश्नस्य प्रतिवचनमपि तदुपर्येव व्यसृजम् ।

श्रीधरमहाभागोऽब्रवीत्—"अद्य सायङ्काले नास्ति कश्च-नाऽपि कार्यक्रमः । तस्मात्सहर्षं भवानेभिः सार्धं गन्तुमर्हति ।"

अहं गृहपतिमभ्यदधाम्—"हो हो येईन मी". (बाढम् । आगमिष्याम्यहम् ।)

तद्गृहवासिनो नमस्कृत्य खल्वावां बहिरागच्छाव । श्रीधर-महाभागोऽपृच्छद्—"उच्यताम् । कीदृशः खलु वार्तालापः प्रावर्तत मराठीभाषायाम् ?"

"नहि कीदृशोऽपि । केवलमसौ मम गृहकार्यप्रवृत्तिवयोऽध्य-यनादिकस्य विषये प्रश्नान् कानप्यप्राक्षीत् ।" अहं प्रत्यवोचम् ।

एतदाकर्ण्य सोऽस्मयत । केन खलु गूढार्थेनोपेतं भवेत्तदीयं स्मितं तत् ?

## दशमः समुच्छ्वासः ।

प्रधानमहाभागस्यावसथ उपरितन्यां भूम्यामासीत् ।[1] भोजनं प्रस्तुतमासीत् । प्रधानमहाभागोऽस्मदागमनमेव प्रत्यैक्षत । स्तम्भफलके खल्वेकस्मिन् तिस्रः परिवेषण्यः स्थापिता आसन् ।

नूतनस्य कस्यापि जनस्य गृह आहारग्रहणे खल्वहं स्वभावतो भृशं सङ्कुचामि । प्रत्येकं कुटुम्बस्याहारग्रहणनिबन्धनः सर्वथा स्वतन्त्रो भवति विधिः । तद्व्युत्क्रमे सञ्जाते तद्गृहवासिनां नैव जायते सुष्ठु धारणा तथा कर्तुरामन्त्रितस्य जनस्य विषये । तस्मादतिमात्रं जागरूकेण सता खल्वामन्त्रितेन जनेन सकौशलमामन्त्रकजनगृहगतो विधिरूहनीयो भवति । 'योगः कर्मसु कौशलमि'ति यदुक्तं व्यासेन, तदेतदर्थमेव खलु । परमिदं कौशलं तदैवायत्तं भवति, यदा खल्वनेकेषां कुटुम्बानामाचारप्रणाली प्रत्यक्षतोऽनुभूता भवेत् । कस्मिन्नप्यशनालय आधावे वाऽऽहारग्रहणमन्यत्, कस्मिंश्चित् परम्पराशालिन्याऽऽचारसमृद्धे च कुटुम्बेऽतिथिभावेन गत्वाऽऽहारग्रहणमन्यत् । एवञ्जातीयकेषु नानाचारप्रचारशालिषु कुटुम्बेषु भोजनार्थमाहूतोऽहं सर्वदा तत्तदाचारव्युत्क्रमणभीतिं तज्जन्यं सङ्कोचं चानुभवामि । तस्माद् भोजनाचारनिबन्धनं किमपि बन्धन-

---

१. भूमिः='मंजिल' इति भाषायाम् ।

मत्रापि भवेदिति भिया किञ्चित्सङ्कोचमिवान्वभवम्, यदा प्रधान-महाभागोऽब्रवीत्—"चल्यताम् । भोजनं प्रस्तुतं तिष्ठति ।"

न खलु हस्तपादादिकस्य प्रक्षालनं, न खलु वस्त्राणा-मवतारणं, न खलु पादत्राणानां बहिर्न्यसनम्— नूनं नासीदत्र किमप्यपेक्षितम् । किञ्च यावदावामुपविशावस्तावत् प्रधान-महाभागो भोजनं प्रारभताऽपि ।

एवंविधे व्यतिकरे क्व खल्वासीत् सङ्कोचस्य कारणम्? बहुभ्यो दिवसेभ्योऽनन्तरमौत्तराहं किञ्च वक्तव्यं पञ्चनदीयं भोजनमुपालभ्यत । तद्विलोक्य प्राक्तनानि व्यतीतानि दिनानि स्मृतिपथमुपयातानि ।

भवतु । अवसिते भोजनाचारे प्रधानमहाभागस्तु कार्यान्तर-गौरवाद् बहिरगच्छत् । गमनात्पूर्वं श्रीधरमहाभागं मम विषये निरदिशच्चापि यद् द्वित्राण्यहानि मया खल्वत्रैव स्थातव्यमिति।

श्रीधरमहाभागो मामपृच्छत्—"उच्यताम् । स्थास्यति भवान् अत्र ?"

एतदाकर्ण्य भूयोऽप्यहं दोलायितमतिः समभवम् । श्रीधर-महाभागः खल्वासीत् सर्वथा सरलस्वभावः । प्रचुरं नासीत्तस्य वैभवम् । प्रधानमहोदयः पुनरेतस्मिन्नगरे प्रख्यातेषु धनिके-ष्वन्यतम आसीत् । तस्य गृहे न केवलं द्वित्राण्यहानि द्वित्रान् मासानपि कश्चिन्न्यवत्स्यत् चेन्नासावक्लिशिष्यत् । प्रत्यहं नियतेन समयेन धनिकगृहगतमातिथ्यं प्राप्स्यत । परं न वेद्मि कस्मात् कारणाद् एषां धनिकानां गृहे निवासाद् अहं सर्वदा बिभेमि । अस्मिन्नल्पीयसि जीविते सम्प्राप्तवानस्मि खल्वनेकै-र्धनिकैः सह निवासस्यावसरम् । परं सर्वदैवाहमिदमन्वभवम्

यद् यथा दरिद्रैः जनैः सहाहमात्मानं शक्नोमि समरसं कर्तुम्, न तथा धनिकैः सहेति। धनिकानां गृहेषु किमपि सार्वकालिकं व्यवहारबन्धनमिवानुभूयते। तैः साकं व्यवहरणोचिता नियमाः सर्वलोकविलक्षणा भवन्ति। तैः सह क्रियमाणे वार्तालापेऽधिकं सावधानेन भवितव्यं जनेन। सर्वदा चतुरस्रतया समाचरितव्यं सर्वमप्यग्रतः पृष्ठतश्च विलोक्य। तेषां चास्माकं च रुचिष्वपि सुमहानस्ति व्यत्यासः। यत्र खलु प्रतिपदं सावधानेन सता कार्यं समाचरणीयं भवेत्, तदपि जीवितं किं जीवितमुच्यते? एतत्प्रत्यनीकम् अल्पवित्तानामवलोक्यताम् जीवितम्! सर्वदैवोन्मुक्तम्। किमपि बन्धनं नास्ति। हसन्तु। विनोदं कुर्वन्तु। भूमौ निषीदन्तु वृक्षस्य शाखाग्रे वा। नृत्यन्तु। गायन्तु। कूर्दन्ताम्। ऊर्दन्ताम्। किमपि बन्धनं नास्ति। अल्पतरेष्वपि सत्सु साधनेषु जगतीगतः सर्वथोन्मुक्तः खल्वानन्दो निर्धनानां समाजे विलोक्यते यावान्, न तावान् सर्वसाधनसम्पन्नानां धनाढ्यानां समाजे कालत्रयेणाऽपि। अतोऽहं श्रीधरमहाभागमवदम्—"अहं तावद् भवता सहैव स्थास्यामि।"

सत्यमेतद् यत् श्रीधरमहाभागस्यासन् साधनानि मर्यादितानि। तेन सह निवासस्तस्योपर्यनावश्यकभारनिपातनमेवासीदेकया दृष्ट्या। तथापि नोदसहत मदीयं मनस्तमुत्स्रष्टुम्। श्रीधरमहाभागोऽपि सर्वथा समतुष्यन्ममेदं निर्वरणं परिज्ञाय।

कञ्चित्कालं तत्रैव व्यश्राम्याव। कामपि निमीलिकामिवान्वभवमहम्। कियता कालेन श्रीधरमहाभागोऽभ्यदधात्—"अद्य सायं भवदर्थमामन्त्रणमेकं वर्तते न वा?"

"वर्तते तावत्। भवानपि स्थास्यति न वा मया सार्धम्?"

"प्रवर्धमानेव खलु पादयोः पीडा मे। एतावता नाहं प्रभविष्यामि भवता सह स्थातुम्।" श्रीधरमहाभागः प्रत्यब्रवीत्।

कञ्चित्कालं तूष्णीं स्थित्वा भूयोऽप्यहं न्यगदम्—"नैव स्थास्यति चेद् भवान्मया सह, दुष्करं तर्हि भविष्यति मदीयं तत्र गमनम्। सङ्कुचामीव खल्वहं किञ्चित्।

"सङ्कोचः ? भवान्महाराष्ट्रीयः सन् महाराष्ट्रीयस्यापि गृहे गमनादुद्विजते ? कुतः खलु ?"

"यतोह्यसावपि महानुभावः सम्पन्नं वर्गं सम्बध्नाति। किञ्च भवान् जानात्येव यदाऽहमेतादृशैः सम्पन्नैर्जनैरेकलः सन् परिवारितो भवामि, तदा कमप्यनिर्वचनीयमिवानुभवाम्युद्वेगम्। तदानीं सगन्धः कश्चन सार्धं तिष्ठेत्, तर्हि किञ्चित्समुच्छ्वसितीव चेतः।"

"हन्त, नोद्वेगः समाश्रयणीयः। नाऽसौ तत्प्रकृतिको महानुभावः। परस्ताच्च, केवलमद्य सायङ्कालमात्रमेव तत्रास्ति स्थातव्यम्। अहमपरेणैकेनोद्देश्येनैतद् ब्रवीमि। यदि भवांस्तेन साकं तिष्ठेद् अद्य, तर्ह्यसौ भवतोऽग्रिमयात्राव्ययमपि प्रभन्त्स्यति। कतिपयैरेव क्षणैर्ज्ञास्यति भवान् धनिकत्वेऽपि कथमसौ गर्वहीनो हृदयालुर्विनोदप्रियश्चास्तीति। परस्ताच्च स भवदीयामेव मातृभाषां भाषते। तस्मान्नात्र चिन्ता कार्या।"

"भवत्वेवमेव तावत्। यथा भवानादिशति तथैवास्तु।" इत्येवं चलन्तं स्वकीयं निश्चयं निश्चलं व्यदधाम्।

तस्यामन्त्रकमहाभागस्योपाह्वः (ननु वक्तव्यं कुटुम्बनाम) खल्वासीत् 'साने' इति। तदानीमापराह्णिको द्विवादनसमयो वा

सार्धद्विवादनसमयो वा भवेद्, यदाऽऽवां तस्य गृहं सम्प्राप्नुव । गृहं निर्जनप्रायमासीत् । सानेमहाभागस्य भृत्यो बहिरागच्छत् । स्वागतकक्षाभ्यन्तरे नीत्वाऽऽवामुपावेशयत् । सानेदम्पती बहिः क्वाप्यगच्छताम् तदानीम् । तयोर्दुहितरौ तत्कालं गृहे स्थित्वा गृहाभ्यन्तरिकीं खेलां कामपि खेलतः स्म । भृत्यः काचकंसयोः शीतलं शर्करोदकसश्रीकं पेयं किमप्यानयद् आवयोः कृते । तं गृहीत्वा श्रीधरमहाभागः प्रस्थातुमुपचक्रमे । अहमुदविजे । स नेतोऽपि पूर्णतयोदतिष्ठद्, यदा सानेमहाभागस्य पुष्परथः शब्दयाञ्चक्रे । तं ध्वनिं श्रुत्वा स तथैव तत्रैव तस्थौ । सानेदम्पती पुष्परथादवातरताम् । कक्षाभ्यन्तरे प्रवेशसमकालं सानेमहाभागो मामभिमुखं व्यलोकयत् सोत्साहेन च वचसाऽभ्यदधात्—"काय पंडितमहाराज, आलांत कां ?" (किं पण्डितमहाभाग, समागतः किं भवान् ?)

"हो". (ओम् ।) अहमुदतरम् ।

श्रीधरमहाभागं विलोक्य स उवाच—"मुहूर्त्तं प्रतिपालयतु माम् । एष आगतः ।"

कतिपयैरेव क्षणैः स गृहान्तरे गत्वा बहिरागच्छत् । श्रीधरमहाभागमपि सार्धमागमनार्थमन्वरुणत् । परं नम्रतया श्रीधरमहाभागः स्वकीयमक्षमत्वमभिव्यानक् किञ्च नमस्कृत्य बहिर्निरगच्छत् ।

अथाहम् एकल एवाभवम् । प्रत्यैयत कमप्यविज्ञातं देशं समागतोऽस्मीति । अनाश्रित्य खल्वैतस्ततयं वाचःप्रपञ्चं सानेमहाभागः स्वकीयां ज्येष्ठां दुहितरमाह्वयद्—"ऊर्मिले" इति ।

सा दुहिता तत्र समागत्याब्रवीत्—"काय आहे बाबा ?" (किमस्ति तातपाद ?)

सानेमहाभागः प्रत्यब्रवीत्—"तामुपवेशनीमाकृष्याऽत्रोपविश ।"

उपवेशनीमाकृष्य सा सर्वथाऽऽवयोरभिमुखमागत्योपाविशत् ।

सानेमहाभागः प्रावोचत्—"वत्से, त्वमधीतस्य संस्कृतस्य पुनरावृत्तिं कर्तुं मना आसीर्न वा ?"

"ओम् तातपाद !" साऽब्रवीत् ।

"वरम् । बाढम् । आदौ खल्वहं त्वामनेन महाभागेन सह परिचितां कारयामि । एष महाभागो विकासनामा जनार्दनसूनुः पण्डितोपाह्वः ।" तदनु मामभि मुखं व्यावर्त्य स उवाच—"इयमस्ति मदीया ज्येष्ठा कन्यका कुमारी ऊर्मिला साने, M. A. in English literature". अथोर्मिलामभिमुखीकृत्योवाच—"बाढम् । तर्हि वत्से, अद्याहमस्य महाभागस्य बेंगलूरनगरपरिदर्शनं प्रतिश्रुतवानस्मि । वेत्स्येव त्वं यदद्याहं तव जननी चैकस्मात् स्थानात् लब्धोपनिमन्त्रणौ स्वः । तस्मात् पुष्परथमपरमादाय त्वमेवैनं महाभागं नगरं परिदर्शय। चम्पामपि संगृहाण स्वात्मना सह चेत्तदीया नृत्यशास्त्रस्य पाठा न भवेयुरद्य । किञ्चैवं शृणु । अद्य बेंगलूरनगरं तथा परितो दर्शनीयं, यथा नायं महाभागो यावज्जीवं नगरमिदं विस्मरेत् ।"

"वरं तातपाद ।" इत्युक्त्वा सा मौनमाश्रित्य तस्थौ।

सानेमहाभागो मामभि पश्यन्नुवाच—"किम् पण्डित-

महाभाग, यदि भवन्तं वयमस्मिन्नेव बेंगलूरनगरे निगृह्णीयाम, कथं भवेत् ?"

अहं व्यहसमेव केवलम् ।

असौ भूयोऽप्युवाच—"पश्यतु । यावज्जीवं तु नैव भवानीदृशीं भैक्षचर्यां चरिष्यति । कुत्रापि कस्मिन्नपि कुलक्करे स्वकीयं लाङ्गूलं तु बन्धनोयमेवास्ति भवता । तर्हि वयमेव कस्मान्न स्वकीये कुलक्करे भवदीयं लाङ्गूलं बध्नीयाम ? बहुभ्यो दिवसेभ्यो वयं चिन्तयामः काचन संस्कृतपाठशालाऽत्र प्रारभ्येतेति । यदि भवान् स्वीकुर्यात् तर्हि तस्याः पाठशालायाः सर्वमपि स्वाम्यं भवते समर्पयिष्यामः ।"

"अहमस्मिन् विषय आलोचयिष्यामि ।"

"बाढम् । अलोचयेद् भवान् । परं तथा भवानालोचयेद् यथा खल्वस्माकं मनोषितं फलवद् भवेत् ।" इत्युक्त्वा स उदतिष्ठत् । ऊर्मिला खल्वप्युत्थाय गृहान्तरे प्राविशत् । कतिपयैरेव क्षणैः सानेमहाभागानां भार्या तत्रागच्छत् । सा गभीरया दृशा मां व्यलोकयत् । परं न किमप्यभाषत । उभौ खल्वपि दम्पती बहिर्निरगच्छताम् ।

तयोर्निर्गतियोः सतोः कतिपयैरेव क्षणैस्तयोः कनीयसी दुहिता चम्पा गृहाभ्यन्तराद् बहिरागच्छत् । मामुपेत्य चातीव मसृणया वाण्या मां प्रणम्याभ्यदधाद्—"माझें नांव चंपा. मीं ऊर्मिलेची धाकटी बहीण आहे मीं पण आपल्याबरोबर आले असतें. पण आज माझा डान्सिगचा क्लास असल्यामुळ्ठें यायचें जमणार नाहीं. आपल्याबरोबर आलें असतें तर खरोखर फार बरं वाटलं असतं मला"

किञ्चैतदुक्त्वा साऽपि निरगच्छत्। तस्यां निष्पतितायां सत्यां तद् भवनमितोऽपि भयावहं प्रत्यभात्। कतिपयैः क्षणैः संविहितबहिर्गमनवेशभूषा ह्यूर्मिला मामुपेत्यावदत्—"चला". (चलतु नाम।)

सा स्वकीयं द्वितीयं पुष्परथं स्वयमेव चालयन्ती मम समीपे समानयद् मां च तदभ्यन्तरे निषदनार्थमुपादिशत्। अभ्यन्तरे प्रविश्य निषण्णे सति मयि गृहभृत्येन पिहितस्तदीयः कवाटकः। स च पुष्परथो मार्गमध्यवर्तिनीं वर्तुलपुष्पकेदारिकां परिक्रम्य मुख्यद्वारतो बहिर्निर्जगाम।

× ×

तद्धि बेंगलूरनगरगतं 'कब्बनपार्क' इत्याख्यं मुख्यमुद्यान-वनमासीद्, यत्र खल्विदानीमावां सम्प्राप्नुव। सर्वत्र भ्रमणार्थिनां विसरः समुदित आसीत्। नानावर्णोपेतां वस्त्रभूषामास्थितवन्तो स्त्रीपुरुषसमुदायास्तत्रत्यानि नानावर्णोपेतानि कुसुमकदम्बकानि प्रतिस्पर्द्धन्ते स्म। समस्तमपि तदुद्यानवनं चलैरचलैः, नीरवैः सरवैः, जीवितैः सुप्तजीवैश्च पुष्पैर्भारावनम्रतां गतमिवाऽऽसीत्। तस्यैवोद्यानवनस्यैकस्मिन् कोणे खल्ववर्तत सर्वथा रिक्तैका काष्ठशिला। तत्र गत्वोपाविशाव खल्वावाम्। दिष्ट्या शोभनमसम्बाधशिवमासीत्तत् स्थानम्।

ऊर्मिला पप्रच्छ—"किम् भवान् नगरगतानन्यानपि भागान् कामयते द्रष्टुम्?"

"मम तावन्नास्त्यभिलाषः क्वाप्यन्यत्र गमनस्य। संख्यातीतानि विलोक्य स्थानानि, स्थानस्य खल्वेकस्यापि याथात्म्येन रसाऽनास्वादनाद् एकस्मिन्नेव स्थाने स्थित्वा तस्य स्थानस्यो-

दरपूरं रसास्वादनं मनाग्वरम् । किञ्चेदन्तावद् एतादृशं शोभनमेकान्तस्थानमस्ति यद् होरागणान् अत्रैव तिष्ठेयमित्यभिलाषो बलवान् जायते ।"

एतादृशः प्रस्तावः—यादृशं खल्विदानीमहमलभे—विहाय दिवास्वप्नान् नैव सामान्यतया क्वाप्यन्यत्र शक्यते समुपलब्धुम् । तादवस्थ्ये, प्रभूतान् वार्तालापाँस्तादृशानत्र स्थित्वा कर्तुमशक्याव, येषां सम्बन्धो मनोभवनिबन्धनैर्मनोभावैः सह भवेत् । परमद्य मम न वेद्मि किमासीत् सञ्जातम् । वयोवृद्धस्य जीर्णमुनेः कस्यापि दार्शनिकेन स्वरेण खल्वहमूर्मिलामपृच्छम्—"अपि पश्यसि कदाचिदिदं सुनीलं, सुविस्तीर्णं चाकाशमण्डलम् ?"

अहमालोचयम् प्रश्नमिममाकर्ण्य सा महतीं विरक्तिमनुभविष्यति किञ्च तस्या ललाटे तादृशाः वलयः काश्चनः प्रादुर्भविष्यन्ति, या हि खल्वेवंविधेषु विषयेष्वनास्थां तदीयामाविष्कुर्युरिति । परं नैव तादृशं किमपि समजायत । अतीव रुचिपूर्वकं साऽभ्यदधात्—"कस्मान्न ?"

"सुबृहदाकृति खल्वस्य स्वरूपं कदापि लघुतरं हृदयं त्वदीयमभिभूतम्, आतङ्कितं किञ्च कम्पितं नैव करोति ?"

"किन्तात्पर्यम् ? नाहमवागच्छम् ।" साऽवदत् ।

"बृहद्रूपमिदं खल्वाकाशं यदा ब्रह्माण्डगताया विशालताया दैत्याकृति चित्रं त्वदीययोश्चक्षुषोः पुरस्तादुपस्थापयति, तदा किं त्वं नैवोद्विजसे ? किञ्च नैतदनुभवसि यद् अस्तित्वमिदं खल्वस्मदीयमस्य बृहतो विश्वस्य तुलनायामतीव क्षुद्रं, नगण्यं च वर्तत इति ?"

"कस्मान्न ?"

"तदानीं त्वं किमालोचयसि ?" अहं तामपृच्छम् ।

अहमालोचयामि जीवितमिदं खल्वस्मदीयमतिमात्रं करुणं वर्तत इति ।"

विषयान्तरमाश्रित्याहमवदम्—"ब्रूहि किं त्वदीयं मतम् ? जीविते गम्भीरताया खल्वेवञ्जातीयकाया, विवेकस्य, सूक्ष्म-पर्यालोचनायाश्च क्षणाः क्वाचित्का एव न वा ? परमुदितेषु खल्वेतेषु निःसंशयं मानवीयानां विचाराणां भूमिरतिमात्र-मुच्छ्रायं भजते । नैवकिमेतदुक्तं समीचीनम् ?"

"समीचीनमेव खलु । परं नैव सा भूमिर्दीर्घकालावस्थायिनी भवतीत्येव जीवितस्य खल्वस्मदीयस्य शोकान्तः पक्षः ।" साऽपि तद्विधामेव समाश्रित्य गम्भीरतां प्रत्यब्रवीत् ।

"कियदिव भूतार्थं त्वदीयमुक्तमेतत् ! न वेद्मि कस्माद् विधातुः सर्गः खल्वयं जीवितगतासु निम्नास्वेव भूमिकासु वर्तमानं मानवं कामयते द्रष्टुम् । अनायासं निसर्गक्रमानुरोधेन केनापि मानवः काममुन्नतां भूमिकामनुप्राप्नुयात्; परं प्रयत्न-पूर्वकं चेदसौ तां भूमिकामधिगन्तुं यत्नवान् भवेत्तर्हि विश्वगताः सर्वा अपि शक्तयः सम्भूय तं विरुन्धन्ति । परवान् खल्वेष मानवः सर्वथा संरुद्धप्रसरः सँस्तत्रैव तथाविध एव चडमडायित-स्तिष्ठति । किं त्वमप्येतादृशीं मानवजीवितगतां परवशतामन्व-भवः कदाचित् ?"

ऊर्मिलाया भव्यरमणीये ललाटे सूक्ष्माकारा वलिरेका प्रादुरभवत् । व्यलयच्चापि तत्कालमेव । संयच्छन्ती स्वकीयं स्मितहासं साऽब्रवीत्—"भवान् मामनुयुङ्क्ते ? अहं स्व-जीवितगताभिः प्रत्यनीकाभिः प्रवृत्तिभिः सह कियदधिकं युध्यामि

किञ्च तस्मिन् युद्धे घोरतरमात्मनः पराभवं विलोक्य कियतीं खलु हताशामहमात्मानमनुभवामि, तदहमेव जानामि।"

कञ्चित्कालं विरम्य सा भूयोऽपि वक्तुमुपचक्रमे—"भवान् मदीयां बाह्यामेव खल्विमामाकृतिं, मांसलस्वस्थगौरमेव खल्विदं शरीरम्, किञ्चोष्ठयोरुपरि विलसन्मधुरमेव खल्विदं स्मित-हसितं शक्नोति द्रष्टुम्; न पुनः कमनीयस्यावरणस्य खल्वस्य पृष्ठतो निलीय स्थितं विभीषणमन्तःकरणगतं हाहाकारम्, उद्भ्राण्डमुपद्रवं, प्रचण्डाश्च समुच्छ्रिता दहनज्वालाः क्वापि।"

भूयोऽपि कञ्चित्कालं विरम्य मम किमपि वक्तुमुपक्रमणा-त्पूर्वमेव सा वक्तुमारभत—"परं सर्वैरपि तैरन्तःकरणगतैः सुप्रदीर्घैर्दहनात्मकैर्भावैः सह युध्याम्यहं सर्वथा तूष्णीं—सर्वथा निःशब्दम्—कमपि किमप्यविज्ञाप्य। तादवस्थ्येऽपि नहि भवान् विज्ञातुमलं भविष्यति मदीये खल्वन्तःकरणे प्रवर्तमानं निदारुणं रणम्। अपि खल्वस्याः परवशताया वर्तते काचिदियत्ता?"

अहं तस्या आत्मनिवेदनं खल्विदम् 'अपृष्टो बहु भाषते' इत्येवञ्जातीयकं प्रत्यायम्। परं यावता प्रश्नकर्ताऽहमासम् ततो नैव सा दोषभाग् भवितुमर्हति। अहं प्रच्छाद्यैव मनोगतं भावं स्वकीयं तामपृच्छम्—"किं त्वं बुध्यस एवंविधा परवशा केवलं त्वमेव विद्यस इति?"

"नाहमन्येषामन्यासां वाऽन्तःकरणाभ्यन्तरे प्रविश्य तत्र वर्तमानानामनुभूतीनां विषये प्रभवामि किमप्यवधारयितुम्। स्वान्तःकरणाभ्यन्तरे वर्तमानास्तावद् बुध्येऽनुभूतीः। मम तावदय-मेव सम्प्रत्ययः—नास्ति मन्दभागधेयो मद्विधः कश्चिदन्यः कृत्स्ने-ऽपि खल्वस्मिन् भूमण्डल इति।"

सर्वथा समतुष्यम् खल्वहं तदीयं निवेदनमेतदाकर्ण्य । तथापि 'मुखमस्तीति वक्तव्यमि'ति न्यायेनाहमवदम्—"एष एव खलु लोकस्य भ्रमः । अन्यजनचित्तान्तर्वर्तिविषयवस्त्वनवबोधात् कारणाद् लोकः स्वकीयमेव चित्तान्तर्गतं विषयमधिकमूल्यमवधारयति। अवधीरयति चापि परेषां चित्तान्तर्गतं विषयवस्तु।

"युक्तं भवितुमर्हति भवदीयमुक्तमेतत् । परं कया रीत्या वयं प्रभवामः परजनचित्तगतान् विषयानवगाहितुम् ?" साऽपृच्छत् ।

"तमपि लप्स्यसे खल्ववसरं स्वकीये जीविते, यदा हि सर्वेषामपि विश्वगतानां प्राणिनां चित्तगता विषयाः सर्वथा स्फटिकनिर्मलाः सन्तः प्रत्यक्षीभविष्यन्ति तव । किञ्च तमवसरमनुप्राप्य त्वमनुभविष्यसि यत्सर्वेषामपि जगतीगतानां प्राणिनां सैवावस्था, या तावकीना वर्तते । सर्वे तद्विधा एव परवशा, यद्विधां त्वमात्मानं पर्यालोचयसि । किञ्च समुच्चितस्य विश्वस्य सङ्कुलितायाः परवशतायास्तादृशं किमाकारं चित्रं विलोक्य त्वं स्वजीवनगतां परवशतां तथैव क्षुद्रां प्रत्येष्यसि, यथा खल्वस्य विशालाकारस्याकाशमण्डलस्य तुलनायां तावकीनमस्तित्वमिदं क्षुद्रं प्रत्येसि।" अहं तेनैव जरठकल्पस्य जीर्णमुनेः कण्ठस्वरेणाभ्यदधाम् ।

"पण्डितमहाभाग, प्रतिपन्नायां तस्यामवस्थायां नूनं सर्वोत्कृष्टं जीवितगतमाश्वासनमपि मां प्रतिपत्स्यते । आत्मनोऽभ्यधिकं दुःखिनं दृष्ट्वा स्वकीयस्य दुःखस्य दहनात्मकत्वं स्वयमेवाऽपचीयते । यत्सत्यमहमात्मनोऽभ्यधिकं दुःखिनं कामये द्रष्टुम्। परं मम जीवितं परिवेष्टय वर्तमानासु खल्वेतासु मर्यादासु

तत्सर्वमशक्यं प्रतिभाति । एतस्माज्जीवितक्रमादुद्धारस्य निर्देक्ष्यति किं भवान् कमप्यभ्युपायम् ?"

ऊर्मिलाया मुखमण्डले खल्विदानीं काप्यपूर्वा प्रश्नात्मकता व्याप्ताऽभवत् । अहं शनकैः स्वकीये चक्षुषी उदतोलयम् । तस्या ललाटफलकमपश्यम् । तत्र हि किमप्युज्ज्वलमार्यत्वं चकास्ति स्म । केशरचनायां किञ्चित् पाश्चात्त्यकेशरचनाशैल्याः सम्मिश्रणमासीत् । सर्वत्रापि शिक्षणोद्भवं गाम्भीर्यं, चिन्तनशीलता च तदीये मुखमण्डले प्रसृते आस्ताम् । अद्भुतः कश्चनाऽऽत्मविश्वासः प्रतिचेष्टं तदीयेभ्योऽवयवेभ्यः प्रस्फुटित आसीत् । नासिकाया अग्रभाग उत्तरौष्ठपट्टिकायां चाविर्भूताः स्वेदकणिकाः सायन्तनस्य सूर्यस्य मधुरतरेषु किरणेषु चकासत्यस्तस्या आकृतिचित्रमितोऽप्यधिकं चारुतरमकुर्वन् ।

अहं सर्वथा स्थिराभ्यां नेत्राभ्यामूर्मिलायास्तन्मनोहरमाकृतिचित्रमवालोकयम् । तस्याः शरीरमभिव्याप्तां सुस्निग्धां त्वक्कान्तिमतीव स्थिरभावेन निरैक्षे । मुखमण्डलगतासु कासु रेखासु तदीयान्तःकरणवर्तिनी प्रदीर्घा वेदना निलीना तिष्ठतीति विज्ञातुं शक्यते । किञ्च सर्वथा हतप्रतिभः समजाये । तथापि यथा कथञ्चित् स्वकीयां प्रतिभां संगृह्णन्नहं तामभाषे—"त्वं मत्तो वर्तमानकालिकात् स्वजीवितक्रमादुद्धरणस्योपायं ज्ञातुमिच्छसि ? किं त्वं मां सर्वज्ञं, विदितवेदितव्यं वा पर्यालोचयसि ? नास्मि तादृशः । तथापि त्वदीयजीवितगतासु सर्वास्वपि वेदनासु मयि निवेदितासु, को वेद, सहजीविभावेन त्वदीयं साहाय्यं, मार्गप्रदर्शनं वा किमपि कर्तुमहं समर्थो भवेयम् ? तस्मात्त्वं सर्वाः खलु त्वज्जीवितगता वेदना मयि निवेदयितुमर्हसि ।"

"शृणोतु तर्हि। मम स्वभावे विलक्षणः कश्चनात्मविरोधो विद्यते। अहमभ्यन्तरे यादृशी वर्ते, बहिस्ततः सर्वथा विपरीता दृश्ये। अहमुपरिष्टाद् अत्यधिकं शान्ता, धीरा, गम्भीरा किञ्च सर्वथोदात्तस्वभावा प्रतीये। परं तत्सर्वं बाह्यमाडम्बरम्। अन्तस्तावद् नितरां चञ्चलमतिर्नीचस्वभावा चास्मि। मदीयं मनो जगतीगतानां सर्वासामपि गर्हितवासनानां निवासस्थानं विद्यते। हीनतरस्यापि, कदर्थिततरस्यापि पुरुषस्य मुखमण्डले वासनोत्तेजकं तीव्रमाकर्षणमनुभवाम्यहम्। येषां पुनः पुरुषाणां मुखमण्डले सर्वथा विलसत्युदात्तं सौन्दर्यं, ते मदीयं चित्तं कथं निर्दयमपहरन्ति, किञ्च दृष्टमात्रेषु तेषु कथमहमात्मन्येवात्मना मर्मविह्वला सञ्जाय इति भवान् स्वयम् अनुमातुमर्हति। प्रत्येकं पुरुष आकर्षणस्य विद्युत्केन्द्रमिव प्रतिभाति माम्। यस्मिन् यावदधिकं सौन्दर्यमुपचितं भवति, तं विलोक्य तावतीमेवाधिकां साङ्घातिकीं पीडामनुभवामि। हन्त, जगतीतले खल्वस्मिन् कीदृशं, कियच्चाद्भुतं सौन्दर्यं सर्वत्र विकीर्णं तिष्ठति! विधात्रा नैव निर्मितमभविष्यच्चेत् सौन्दर्यमेतत्, कियच्छोभनमभविष्यत्? विधात्रा सर्वश्रेष्ठमभिनन्दनीयं वस्त्विति मत्वा जीविते सौन्दर्यमिदमाहितं भवेज्जातु। परन्त्विदमेव मां सर्वाधिकमनभिनन्दनीयं वस्तु प्रतिभाति। नात्र हेतुस्तदीयमप्रियत्वं; किन्तर्हि तदीयं घोरतरमानसिकविपत्तिजनकत्वमेव। दूरस्थिता खल्वहमेतत्सौन्दर्यं पश्यामि। न पुनस्तदुपयातुं प्रभवामि। तावान् विघ्नसहस्रसङ्कुलोऽयं मार्गो, येन सर्वथा पुरुषसौन्दर्यापहृतचित्तव्यापाराऽपि नाद्यावधि पुरुषसौन्दर्यस्योपभोगं कर्तुं समर्थाऽभवम्। तस्मात्सर्वथा निःशब्दा तिष्ठामि। परं यावदेवाहं निःशब्दा

भवामि, तावदेवाधिकं मदीया वासना मदभ्यन्तरे कोलाहलं जनयन्ति । अहं ताः सर्वाः प्रयत्नतः सञ्छादयामि । केनापि खल्विङ्गितेन नाहं पित्रोः, स्वजनेष्वन्येषु वा संस्तुतेषु जनेषु व्यक्तीकरोमि—वासनाया एतावान् भीषण आखेटः सञ्जाताऽस्मीति । पण्डितमहाभाग, अपि भवान् अर्हति मदीयमेतदन्तर्द्वन्द्वं किञ्च वर्तमानजीवितगतं पारवश्यमूहितुम् ?"

अहमत्रान्तर आकाशं प्रत्यवालोकयम् । सूर्यः खल्वितोऽप्यस्ताचलचूडावलम्बी स्वकीयया सान्ध्यकालिक्या रक्तिमप्रभया ह्याकाशं प्राकाशयत् । तदुद्गता रश्मयः सरलमूर्मिलाया मुखमण्डले न्यपतन् किञ्च तत्सर्वथा सुवर्णमयमकुर्वन् । तस्या भालप्रदेशे, नासिकाग्रभाग, उत्तरौष्ठे चोद्भिन्नाः सुमृदुलाः प्रस्वेदबिन्दवः खल्वितोऽप्यधिकं कान्तियुक्ताः सन्तोऽचकासन् । अहं मदीयं कृत्स्नमपि दृष्टिव्यापारं स्वेदनिबन्धनेषु तेष्वेव मुक्तासश्रीकेषु बिन्दुषु प्रणिहितमकरवम् । तानुज्ज्वलान्, कोमलमृदुकान्, परममनोहरांश्च तदुत्तरौष्ठपट्टपृष्ठगतान् स्वेदबिन्दून् विलोक्य मम सौन्दर्यसमाधिरेव प्रतिपद्यत इति प्रत्यायम् ।

ऊर्मिलाया वचनचक्रमितोऽपि तथैव प्रवर्तते स्म—"भवान् कतिपयेभ्यः क्षणेभ्यः प्राग् अतीव सूक्ष्मतया ममाकृतिरेखाः पठितुं प्रायतत न वा ? किं भवान् तासामेकतरस्मादप्यंशाद् इदमजानाद् यन्मदन्तरङ्गे वासनायाः, प्रणयाकर्षणस्य, कामुकतायाश्चैतादृशः समुद्दग्धो ज्वालामुखः प्रज्वलतीति ? मन्ये नैव भवानजानात् । एतावदधिकमहं ता वासना आवृणोमि । जना मां पश्यन्ति; मदीयं शान्तं स्वभावं, सर्वदा प्रसादयुक्तं च परिदृश्यमानं मुखमण्डलं विलोक्य मम परोक्षम् मां स्तुवन्ति,

वदन्ति च नेयमन्यकन्याजनसदृशी मानुषी कन्या ; किन्तर्हि काचन देवकन्या वर्तत इति । मदीयं सौन्दर्यं, सौजन्यं, प्रसन्नां च मनोवृत्तिं मनोहृत्य प्रशंसन्ति । किं भवानालोचयति प्रशंसा-वाक्यानि खल्विमान्याकर्ण्य तुष्याम्यहमिति ? बाढम् । आसीत्कालः खल्वेको, यदाहमतुष्यम् आकर्ण्यमानि प्रशंसा-वाक्यानि । परं न खल्विदानीम् । इदानीं तावदहं सर्वथा-ऽऽतङ्किता सञ्जाये । स्तुत्या खल्वनया किञ्च साधुस्वभाव-निबन्धनया सार्वत्रिक्या चर्चया तावदितोऽपि परवशा सम्भ-वाम्यहम् । मदीयमन्तःकरणं तावत्तादृशमनर्गलं जीवितं कामयते, यादृशं कस्या अपि नीचेति प्रख्याताया: स्त्रियो भवितुमर्हति । परं साधुस्वभावनिबन्धना ख्यातिर्मदीया तत्सर्वं विरुणद्धि । किञ्चैतेनेतोऽप्यधिकं भीरुत्वं ममान्तरङ्गे पदं निदधाति । यावत्येवाधिका मम प्रशंसा भविष्यति, तावत्येवाहं बन्धने पतिता भविष्यामि किञ्च वासनानां तृष्णोपशमस्तावानेव दुष्करः प्रतिपत्स्यते । प्रशंसानां खल्वासां लौहप्राकारेण परि-वेष्टिता, दुर्दमनीयाभिर्वासनाभिराक्रान्ता, जर्जरीभूतान्तरङ्गा मादृशी नारी, भवानेव निर्दिशतु, किं समाचरेत् ? क्व गच्छेत् ? केनोपायेन दन्दह्यमानं स्वकीयं हृदयमुपसान्त्वयेत् ? श्रूयताम् । इदानीं तावदहमनयोर्द्वयोः किमप्येकतरमभिलषामि—मदीया वासनाः, सौन्दर्यं प्रत्याकर्षणमित्येवमादि सर्वमप्यत्यन्ताय विनष्टं वा सञ्जायेत, तासां पूर्त्तिमार्गे विद्यमाना नानाविधा अवरोधा अपसृता वा सञ्जायेरन् । तदैव मे मनः शममनुभवितुमर्हति ।"

अहं सर्वथा समनोयोगं, निर्विकारं चोर्मिलोक्तां कथामिमा-मश्रृणवम् । सकृत् तां प्रति सप्रणिधानमवालोकयम् । सा

पूर्ववदेव मनोहारिणी, साधुचरिता, तेजस्विनी च प्रत्यैयत। सर्वं खल्विदमहं स्वनेत्राभ्यामपश्यम्। कथमहं सहसा मन्यै—'कमलानां मनोहराणामाविर्भावाद् विसंवदति शीलमि'ति ? किमस्मिन् संसारे कस्याप्यसाधुचरितस्य जनस्य मुखमण्डले तादृशी निर्मलोज्ज्वला रत्नकान्तिः शक्नोति प्रसतुं, यादृशो खल्वस्या ऊर्मिलाया मुखमण्डले प्रसृताऽऽसीत् ? चारित्र्यमिति यदुच्यते तत्किम्भवति ? प्रत्यङ्गं स्वजीविते सौन्दर्यस्य प्रतिष्ठापनं, सौन्दर्यस्य सङ्गोपनं किञ्च सौन्दर्यस्य संवर्धनमेव तावद् भवति सच्चारित्र्यम् ? तथात्वे यस्य खल्वङ्गादङ्गात् प्रस्फुटति सौन्दर्यस्याऽनुपमा कान्तिः, प्रस्फुटति सौन्दर्यस्याप्रतिमं, नयनमनोहरं, दिव्यं ज्योतिः, केन वचसा तमहं दुःशीलं, दुश्चरित्रं च वदेयम् ? स दुश्चरित्रो, यो ह्यसुन्दरः, बीभत्सः, जुगुप्सितश्च; यो हि निसर्गप्रदत्तं सौन्दर्यस्याऽप्रतिमूल्यं राशिमवागणयत्; यस्य हि नापि रूपे लावण्यं, नापि वाण्यां माधुर्यं, नापि च व्यवहारे सत्यसन्धत्वम्। यस्मिन् खल्विमे सर्वे गुणा यौगपद्येन विद्यन्ते, स स्वेनैव वचसा स्वात्मानं कियन्तमपि दुःशीलं वदेद्, मम कृते नास्त्यसौ दुःशीलः कालत्रयेणाऽपि। स तावन्ममाभिनन्दनीयो भवति —वन्दनीयो भवति।

अहमत्यन्तं सहानुभूत्या ह्यूर्मिलामवोचम्—"अन्यत्किमपि नास्ति। किञ्चिदधैर्यमुपजातं वर्तते त्वदीये चेतसि। तस्मादेवाऽधैर्यात् त्वं तथाविधं पारवश्यमनुभवसि। धैर्यमवलम्बस्व। सर्वं सुव्यवस्थितं समुपनंस्यते।"

सभावोद्रेकं साऽब्रवीत्—"भवानपि मां धैर्यमेवावलऽम्बितुं मन्त्रयते ? नास्ति ममाऽस्मिन् धैर्यावलम्बने विश्वासः। कमप्य-

न्यतरमन्तःसारवन्तं मन्त्रयताम् भवानभ्युपायम् ।"

"अधैर्यवशाद् नैव वस्तुनस्तारतम्यं सम्यगवगम्यते । तदेव कारणं यत्प्रत्येकं पुरुषः समानभावेन प्रतिभात्याकर्षणस्य केन्द्रम् । अथ त्वयेदानीं किं समाचरितव्यमिति प्रष्टव्ये ह्याकर्षणात् खल्वेतस्माद् आत्मानमपनीय त्वया पुरुषाणां गुणावगुणेषु, आनुकूल्यप्रातिकूल्येषु, स्वभावशाबल्येषु च चिकित्सात्मको दृष्टिक्षेपः कर्तव्य इत्येव मदीयं वक्तव्यं भवति । एतेन हि तं जनं लघुनोपायेन शक्ष्यस्यन्वेष्टुं, यस्त्वदीयस्य चित्ताकर्षणस्य परमं भाजनं भवितुमर्हति । अन्विष्टे खलु तस्मिन् जने त्वं कृतार्थतामनुभविष्यसि । अलम् । तमेव निवृणीष्व । तमेव च सर्वात्मना स्निह्य । अनेन त्वदीयं मनो नानाविधेभ्योऽनिर्णयेभ्यो मुक्तं सद् निर्णीतप्राये खल्वेकस्मिन्नेव वस्तुनि सन्निहितं भविष्यति । स जनस्तवाऽधिगतो भवेद्वा न वा,मनस्तावत्त्वदीयं वर्तमानकालापेक्षयाऽधिकतरं शममनुभविष्यतीत्यत्र नास्ति सन्देहः ।"

"कथं सर्वमिदं प्रतिपद्येत ? यथा खलु न भवन्ति हृदयगता दुरवगाहा व्यापारा मानवाधीनास्तथैव न भवति विश्वगतं व्यतिकरजातमपि मानवाधीनम् ।"

अहं तामाश्वासयम्—"मा चिन्तां कार्षीः । नियतेर्व्यापाराः खलु स्वयमेव तत्सर्वं सम्पादयिष्यन्ति, यत्त्वं कामयसे । त्वया केवलं नियतिनिर्धारितेषु नियमेषु विश्वासो विधातव्यः । यावतो दहनात्मकान् अनुभवान् त्वमिदानीमधिगच्छसि, आगामिनि काले खल्ववश्यं तादृशाः क्षणाः प्रादुर्भविष्यन्ति, यदा त्वं तावत एव शीतलाननुभवानधिगमिष्यसि । ध्रुवमवेहि दृश्यमाने खल्वस्मिन् जगति नास्त्यैकान्तिकत्वमिति । कस्यापि जीवित-

मेकरसं स्यादिति नास्ति निसर्गस्याभिलाषः । स निरन्तरं रस-परिवर्त्तनं विदधाति । अद्यतनः परिक्लेशितो मानवो गच्छता कालेन क्लेशमुक्तो भवति । किञ्चाद्यतनः सुप्रसन्नः, सुप्रहृष्टश्च मानवो गच्छता कालेन करालक्लेशदंष्ट्राशतैर्निश्चूर्णितो भवति। एतावता, विश्वगतं परिवर्तनशीलं खल्वेनं क्रमबन्धं दृष्ट्वा नैव कदापि मानवेन विगलितधैर्येण भाव्यम् ।"

अहमालोचयम् मदीयमिदमुपदेशवाक्यमाकर्ण्य तस्या जिज्ञासा शान्ता भविष्यतीति । परं सा विलक्षणमेवैकं प्रश्न-मपृच्छत् । साऽब्रवीत्—"सर्वथा यथार्थं भवदीयं वचनमिद-मित्यभ्युपगच्छामि । परं भवान् प्रभविष्यति किं निर्देष्टुं किंरूप-म्भविष्यति मे श्वस्तनं भविष्यदिति ?"

अहमवोचम्—"न विदित आशयः ।"

साऽब्रवीत्—"अयं खल्वाशयः—केन विधिना मदीयं मनः शमं प्रतिपत्स्यते—किं वासनानां विलयो भविष्यत्याऽऽहोस्वित् तासां पूर्त्तिः प्रतिपत्स्यते ? अद्यतनीनां दहनात्मकानां खल्वासा-मनुभूतीनां कीदृशः परिणामो भावी ? अपि प्रबोधयिष्यति भवान् किमप्यस्मिन्विषये ?"

प्रश्नं खल्विमं श्रुत्वा नाहमात्मनो हासोद्रेकं विनियन्तुं शशाक । अहमभाषे—"किं त्वं मां तत्त्वज्ञं, त्रिकालदर्शिनं वा मन्यसे, येनाहं त्वदीयं भविष्यत्कालमुपजीव्य किमपि शक्नुयाम् प्रबोधयितुम् ?"

स्मयमानवदना साऽवदत्—"अहं तावद् भवन्तं तथाविधमेव प्रत्येमि । मदीया तावन्नास्त्येककालदर्शिताऽपि ।"

"साधु ! इदमप्यद्वितीयं वदसि । एतावती कृतविद्या, कृत-

बुद्धिश्चासि स्वजीविततवर्त्मनां दिङ्निर्धारणं नैव शक्यं कर्तुं त्वयेति कथं सम्भाव्यते ? यद्यहमेवनं विषयं प्रष्टव्यो भवामि तर्हि शृणु मदीयं वक्तव्यम् । अशक्यः खल्वेष वासनानां विलयः। निसर्गः स्वयमेव खल्विमा वासना उत्पादितवानस्ति । न पुनर्निसर्गोत्पादितं किमपि वस्तु निष्प्रयोजनं भवितुमर्हति । सुनिश्चितेनैव योजनानुरोधेन केनापि प्रादुर्भूता वासनास्त्वयीमाः। लक्ष्योकृत्य खल्वेतत्सर्वम् इयमेव मदीया भविष्यद्वाणी भवितुमर्हति—यदद्यतनो मानसिक्यशान्तिस्त्वदीया गच्छता कालेन नूनमपयास्यति किञ्च साऽपयास्यति त्वदीयानां वासनानां पूर्त्या ।"

"वासनानां पूर्त्या ???" ऊर्मिला सुतीक्ष्णं चीत्कारमकरोत् ।

"बाढम् । वासनानां पूर्त्या । यदा खल्वेकतो निसर्ग उपजनयत्याकाङ्क्षास्तदा स एव खल्वपरतस्तासां सम्बिभर्ति पूर्तिसाधनान्यपि । अथ नाटकप्रियः खल्वेष निसर्गः । तस्मादेव कारणात् तादृशो विलम्बः सञ्जायत एतासामाकाङ्क्षाणां पूर्तिकर्मणि। किम्बहुना ? जगतीगतं प्रत्येकं वस्तु नाटकीयं भवति । नाटकीयतायाः खल्वेतस्या योगेनैकवर्णाऽऽकाङ्क्षापूर्तिरिन्द्रधनुरिव सप्तवर्णा सञ्जायते । तदानीमानन्दानुभवः खल्वितोऽपि प्रगाढतां प्रतिपद्यते । आकाङ्क्षोदयसमकालमेव तदीया पूर्तिरपि प्रतिपदम् प्रतिपद्यतामिति प्रायेण सर्वेषामेव जायतेऽभिलाषः । परं सर्वं तेषामभिलाषानुसारमेव प्रतिपद्येत चेत् कुतस्तर्हि नाटकीयतायाः सम्भवः ? किञ्च कुतस्तर्हि…"

ऊर्मिला सम्प्रत्याविष्टेव खल्वासीत् । मां मध्य एव

विनिवार्यं साऽब्रवीत्—"कियत्क्रूरं खल्वस्ति नाटकमेतत् ?"

"किञ्च कियत्सदयं खल्वस्ति पर्यवसानं तदीयम् ?" अविकृतचित्तः प्रत्यवोचमहम्।

एतच्छ्रुत्वा कञ्चित्कालं सा शान्ता समवातिष्ठत। अहमपि शान्तः समवातिष्ठे। परितो वातावरणे नासीत् किमपि विशिष्टं परिवर्तनमितोऽपि। बहव उद्यानविहारिण आवयोरन्तिकान्निरगच्छन्। केचिदावामभिप्रायगर्भया दृशा व्यैक्षन्ताऽपि। परं नहि कस्यापि मनस्यावयोर्विषये खल्वभद्रा कल्पना कापि प्रादुरभवत्। कथं खलु शक्यस्तस्याः प्रादुर्भावः, ऊर्मिलाया मुखमण्डले राजमाना तेजस्विता, आर्यत्वपूर्णं आविर्भावः किञ्च निर्विकारा वृत्तिर्यदा वर्मेवावामरक्षन् ?

अहमनेकविधास्तरुणीरपश्यम्। काश्चित्तथाविधा भवन्ति, या विलोक्य ताः प्रत्याकर्षणमनुभूयते। कासाञ्चिद्रामणीयकमस्माकं स्तुतेरेव विषयो भवति केवलं, न तदुत्पादयति तावदस्माकं मनःसु कमप्याकर्षणं विकर्षणं वा। कासाञ्चिद्रामणीयकं भेदकत्वोपेतं भवति। ताभिः सह सञ्जाते चक्षुःसाक्षात्कारे विद्युत्कशाघात इवाऽनुभूयते। काऽपि स्तब्धतेव, कापि शून्यचेष्टतेव सम्मूर्च्छति मनसि। कासाञ्चिद्रामणीयकमुद्दीपकं भवति। मनसि मनसिजः शनकैरङ्कुरितो भवति ता विलोक्य। कासाञ्चित्तद् वाजीकरणात्मकम्भवति। कासाञ्चिद् रामणीयकं बिम्बनात्मकं भवति। एकदा सञ्जाते दर्शने सदातनाय कालाय तासां मूर्त्तिरक्ष्णोः पुरस्तादेव तिष्ठति। कृते प्रयत्नेऽपि न सा विलीयते। काश्चित्तरुण्यस्तथाविधा भवन्ति, या विलोक्य शारीरिकवासनानां पूर्तिरेव तासां जीवितसर्वस्वमिति प्रतीमो

वयम् । किञ्च तास्तादृशवासनापूर्त्तिमेव प्रयोजनीकृत्य जगत्यामवतीर्णाः सन्तीति प्रतीयते । कासाञ्चिद् वदनरामणीयकं शारीरिकवासनापूर्त्यतिरेकवशात् सर्वथा हीनप्रभं, कलुषितप्रायञ्च प्रतिभाति। किमपि तिरस्कारपूर्णमाकर्षणं तासां विषये जनोऽनुभवति । काश्चित्स्त्रियोऽस्वाभाविकेन विधिना स्वकीययोः खल्वाकारप्रकारयोः, हावभावादिकेषु चापि रामणीयकमुत्पादयितुं निष्फलं प्रयतन्ते । ता विलोक्य तासां विषये सानुक्रोशं भवति जनस्य चित्तम् । तावदेव । न तावतोऽधिकं किमपि । काश्चित् स्त्रियस्तथाविधा भवन्ति, यासां दर्शनं न केवलं वासनानामुदयं, किन्तर्हि भीषणं कमपि मानसिकं क्षोभमुद्भावयति । जनस्ता आसादयितुं व्याकुलः सन् सर्वथा चडमडायितो भवति । कासाञ्चिद् रामणीयकं खल्वार्यत्वोपेतम्भवति । ता विलोक्य ताः प्रत्याकर्षणमप्युत्पद्यते, तासां सान्निध्यस्याभिलाषोऽपि जायते, ताभिः सह सम्भाषणस्येच्छाऽपि प्रादुर्भवति; परं नैव कश्चनाऽप्युद्भवति शारीरिको विकारो मन्मथनिबन्धनः । केवलमिदमेवानुभूयते यत्तास्ताः कामयमानस्य जनस्य सर्वात्मना वशंवदाः सम्पद्येरन् । कासाञ्चिद्विषये नैतदनुभूयते । चित्ताकर्षणगुणोपेतास्ताः केनाऽपि पुरुषेण सह सम्भाषेरन्, केनाऽपि सह हसेयुः, विनोदं कुर्युः, नहि कस्यापि चेतस्युपद्रवस्य लेशोऽपि प्रादुर्भवति। एवञ्जातीयकाभिः स्त्रीभिर्व्यक्तिसमुदायस्य, सामुदायिकं खल्वानन्दवर्धनं जायते । कासाञ्चिद् मुखाकृतिर्जनस्य चेतसि शमस्य धारामिव प्रवाहयति । वासनाभिर्विह्वलीकृतोऽपि जनस्तासां सन्निधौ गच्छेत् चेत् तत्कालमेव वासनाविरहितः सन् शममनुभवेत् । कासाञ्चिद् रामणीयकं ता विलोकयतो जनस्य चेतसि

सक्रियां शान्ति, सक्रियमानन्दं, सक्रियं च मनःस्थैर्यमुत्पादयति। ऊर्मिलाया वदनरामणीयकमपि तादृशमेवासीत्। तां विलोक्य व्याकुलमपि मनः शान्ति स्थैर्यञ्चान्वभवत्। किञ्च शीतत्व-पावनत्वातिशयवान् गङ्गाप्रवाह इव कश्चित्प्रावहत्।

अतस्तां प्रसृतां निःशब्दतां भङ्क्त्वा खल्वहमूर्मिला-मपृच्छम्—"ऊर्मिले, रामणीयकं त्वं तावदद्भुतं कलयसि। अनुभवस्यपि किं कदाचिद् रामणीयकमिदं स्वकीयं स्वकीये-नैवान्तरात्मना ?"

अहमेतेन प्रश्नेन तदीयां प्रतिक्रियां तद्विषयिकीं ज्ञातुमैच्छम्। बहुभ्यो दिवसेभ्यो मदीये मनस्येतदागच्छति स्म यत्कामपि खल्वप्रतिमरूपलावण्यवतीं चिरण्टीमेकान्तमासाद्य पृच्छेयम् किम्मूल्यं तदीयस्य वदनरामणीयकस्य तस्याः स्वकीयायामेव दृष्ट्यामिति। कुसुमलक्ष्मीं नाहमशक्नवम् प्रश्नं खल्विमं प्रष्टुम्। एवंविधानां प्रश्नानां कृते वातावरणविशेषस्यानुकूल्यमपेक्षितं भवति। अथापेक्षितं तदानुकूल्यमासाद्य तां सुकुमारचर्चामहमत्र प्रारभे विधातुम्।

ऊर्मिलाऽब्रवीत्—"दर्पणे मुखं स्वकीयं खल्वहं बाल्यात्प्र-भृत्येव पश्यामि। स्वकीयेन मुखप्रतिबिम्बेन खल्वेतेन सह तथा परिचिताऽस्मि सञ्जाता, यथा नाहं नावीन्यं किमपि तत्रोपलभे। बाल्यादारभ्येदानीं यावत्सर्वथा ह्यपरिवर्तितरसा प्रतिभाति मुखाकृतिर्मदीया। यदा पुनरभिदधति जना मां रमणीयरूपदर्शनां तदा तद्वचनवशंवदा चिरपरिचितां मुखाकृतिं स्वकीयां मनस्येवा-ऽहमपि विशिनष्मि रमणीयेति विशेषणपदेन। तथात्वेऽपि नैव कदाप्यहमन्वभवम् मदीया मुखाकृतिर्बहुमानभाजनं भवतीति।"

एतदाकर्ण्य न्यमज्जम् खल्वहमतिगभीरे विचारसमुद्रे। इयमेव किं भवति सर्वासामपि रमणीयमुखाकृतीनां वधूनां धारणा स्वात्मनो रामणीयकस्य विषये ? दर्पणाभ्यन्तरे स्वकीयां रमणीयमुखच्छायां प्रतिवीक्ष्य नैव जायते किन्तासां गर्वस्य स्पर्शोऽपि ? तदेव किं रामणीयकं रामणीयकं भवति यद्रमणीय-मुखमण्डलवत्सु नैवोत्पादयति गर्वनिबन्धनं भावनालेशमपि ? ये जनाः पुनः स्वकीयां रमणीयतां बहु मन्यन्ते किं तेषामूनं सञ्जायते रमणीयताया मूल्यम् ? किञ्च गर्वविरहितं किं रामणी-यकमतिमात्रमुच्चैः पदमधिश्राययति रमणीयानां जनानां व्यक्तिमत्त्वम् ? आलोचयन् किल प्रश्नानेतान् अहमन्वभवम् सर्वथा गर्वोष्मणा विरहितमेव रामणीयकं क्षमते जनान् मन्त्र-मुग्धान् कर्तुमिति ।

"कम् पुनरात्मनो मुखमण्डलावयवं प्रशंसनीयतरं मन्यसे त्वम् ?" अन्यस्यामेव दिशि व्यावर्तयमहं विषयम् ।

"विषमः खल्वेष प्रश्नोपन्यासः। अहन्तावत् पुरुषमुख-मण्डलाश्रयं रामणीयकं रामणीयकं मन्ये; न पुनः स्वकीय-मुखमण्डलाश्रयम् ।" सोदतरत् ।

"तथापि स्वकीयमुखमण्डलनिबन्धनाः काश्चित्तु सञ्जाता एव भवेयुस्तावकीना धारणाः । दर्पणे स्वकीयां मुखच्छायां विलोक्य कं खल्ववयवं रमणीयतरं प्रत्येसि त्वम् ?—केशा, भालप्रदेशो, भ्रुवौ, नेत्रे, नासिका, कपोलौ. उत्तरोष्ठपट्टिका, अधरोष्ठो, दन्तपंक्तिः, चिबुकं, ग्रीवा चेत्येवमादयो मुखमण्डला-ऽवयवाः । कः खल्वेतेषु मनोहरतर इति त्वदीयं मतं भवति ?"

किमपि सञ्चुकोच सा मदीयं प्रश्नमिममाकर्ण्य । रक्तौ

समजायेताम् तदीयौ कपोलौ। अवानमताम् पक्ष्मणी। विचित्रेण केनापि साचिवीक्षितकेन मां वीक्षमाणा केवलमेतावदेवाऽवोचत्सा—"कीदृशं पृच्छति प्रश्नं भवानपि ?"

"किं बीभत्सं प्रश्नं कमपि पृच्छाम्यहम् ?"

"कः खल्वाह बीभत्सः प्रश्न इति ?"

"कस्मात्तर्हि क्रियते तावान् सङ्कोचः ? नूनमहमद्वितीयां मन्ये त्वां रूपवतीम्। एतस्मादेव प्रष्टुमिच्छामि त्वां त्वमप्यात्मनो रामणीयकमुपजीव्य किमपि पर्यालोचयसि न वेति।"

"अहमितः सङ्कोचभारेण खल्ववचूर्णयाम्यात्मानं, भवान्पुनस्ततो नैव विजहाति प्रश्नमालिकामेताम्। एतावत्त्वहमवश्यमनुभवामि यदहं रूपवत्यस्मि—पर्याप्तं रूपवत्यस्मि। परं नैव कदाप्यवाधारयम् कतमः खलु भागो मदीयस्य मुखमण्डलस्य सविशेषं रमणीय इति।" किञ्चिदल्पीकृत्य सा स्वकीयं सङ्कोचमवदत्।

"साधु तर्हि। अहमेव विज्ञापयामि। त्वदीययोर्नासारन्ध्रयोरधस्ताद् उत्तरौष्ठपट्टोपर्युत्सेधयुक्ते ये द्वे ऋजू रेखे कृष्टे स्तस्तयोर्मध्ये यः खल्वेकोऽवनतो गर्तकल्पो भागो, यं हि 'सम्मोहननिखात' इत्यामनन्ति शरीररचनाशास्त्रकाराः, स एव त्वन्मुखमण्डलगतं सर्वाधिकमाकर्षणस्थानम्। किञ्च यदा त्वं लीलापूर्वकं स्वकीयं तमुत्तरौष्ठं दन्तैर्दंष्टुं प्रयतसे, तदानीन्तनस्य नास्तीयत्ता त्वदीयस्याऽऽकर्षणस्य। तस्मिन्नेव पुनः समये यदि सूक्ष्माः स्वेदकणिकाः खल्वपि तत्रोद्भिन्नाश्चकासेयुस्तर्हि क इव स्यात्प्रभुस्तद्रामणीयकं वचसोपवर्णयितुम् ?"

श्रुत्वेदं मदीयमुक्तं भृशमिव सा भेजे लज्जावनम्रताम्। प्रबल: खल्वाविरभवत् स्वेदस्योष्मा तस्या ओष्ठपट्टे, ललाटफलके च। मुहुर्मुहुः सा स्वपाणितलवर्तिना, तनुतरसूत्रपरिवीतेन, मृदुना करकर्पटेन निष्फलमपामार्ट् तान् स्वेदबिन्दून्। नैव पुनर्व्यरमत् स स्वेदोद्भेदः।

अहसम् खल्वेवाहम्। अवदम् चापि—"कस्मादत्थाचारः खल्वेष निरपराधेष्वेतेषु ललितमृदुकेषु स्वेदोदबिन्दुषु? एभिस्तावत्त्वदीयम्मुखमण्डलं चतुर्गुणमधिकं कान्तं सञ्जायते।"

"अहं तावदतिमात्रं जुगुप्से खल्विमं स्वेदम्। अपमार्जमपमार्जं त्रायस्वत्रायस्वेति सञ्जायते मम।"

"कस्मात्तर्ह्यपमार्क्षि? आस्तां नामायं तथाविध एव। किं त्वदीयमेतेन विगुणं सञ्जायते?"

"अपि यत्सत्यं बहु रोचते भवते प्रस्वेदपर्याविलं मुखमण्डलं कस्यापि?"

"बाढम्। बहु रोचते। स्वास्थ्योपेते, सुमांसले, तेजःशालिनि च मुखमण्डले सुव्यवस्थितं मुक्ताचूर्णमिव व्याप्तो भवेत्प्रस्वेदस्तर्हि नूनमतिमात्रमुपचीयते प्रमाणमाकर्षणस्य।"

"नाहं शक्नोमि सोढुमिमं क्षणायाऽपि। अहं तावत्तत्कालमपमार्ज्मि।" एतदुक्त्वा भूयोऽपि स्वकीय उत्तरौष्ठे समुपचितान् स्थूलस्थूलान् स्वेदबिन्दून् स्वकीयेन करकर्पटेनातीव सुकुमारतया सा खल्वोखितुं प्रारेभे।

"भिन्नमतिर्हि लोकः। तथापि ये हि रामणीयकस्य मर्मज्ञाः परीक्षकाः कवयस्ते तु स्वेदस्य महिमानं खल्वतीव साधुतया प्रकटयन्ति। भारविः स्वकीये किरातार्जुनीये क्वाप्येवमाह—

'सम्वेदे श्रमसलिलोद्गमो विभूषां; रम्याणां विकृतिरपि श्रियं तनोती'ति । अहं पुनस्त्वां कथयामि कदाचिदपि ज्येष्ठमासे, मध्याह्नकाले, प्रखरतरसूर्यातपे पादक्रोशं यावत् प्रजवं धावित्वा स्वगृहमागच्छ । आगत्य च दर्पणस्य सम्मुखमास्स्व । तत्कालमेव मुखमण्डलं त्वदीयं चेलक्नोपं क्षरद्भिर्बृहत्परिमाणैः प्रस्वेद-बिन्दुभिः परिव्याप्तं भविष्यति । तदा त्वं स्वकीये मुखमण्डल आवि-र्भूतान् प्रस्वेदस्य स्थूलस्थूलान् तोयबिन्दून् तदेकदृष्ट्या वीक्षस्व । त्वरितमेव भारविवचनस्यैतस्याऽर्थगौरवं कृत्स्नमपि तवाऽवगतं भविष्यति ।"

"परमनेकेषां मुखमण्डलेषु प्रस्वेदो भृशमिव जुगुप्साकरो दृष्टिगोचरतां याति । मलिनतैलस्येव चिक्कणता तत्र म्रक्षिता प्रतिभाति ।"

"तर्ह्यरम्यं भवेत् तेषां मुखमण्डलम् । स्वेदस्तु तेषामेव जनानां मुखमण्डलस्थं विभूषणं भवति, येषां खलु तानि मुखमण्डलानि निसर्गत एव रम्याणि भवन्ति ।"

"कथं पुनर्निश्चिनोति भवान् इदं रम्यमिदमरम्यमिति ?" अतिमात्रं विवादास्पदं विषयमुपक्रममाणा साऽपृच्छत् ।

"मनोहरः खल्वयं प्रश्नोपन्यासः । तथापि तादृशो महानयं प्रश्नौघो, यमुपजीव्य होरागणान् विमृश्यापि नैव सन्तोषावहं प्रतिवचनं किमपि शक्येत कर्तुम् । किमहं त्वां पृच्छेयम् किं रम्यमिति त्वदीयं स्वकीयं मतं भवतीति ?"

"अहं भवन्तं पृच्छामि । भवान्पुनर्मामेव पृच्छति । नैतन्न्याय्यम् । भवान् निर्दिशतु कथं निर्वक्तव्या रम्यतेति ।" सा सहासं प्राब्रवीत् ।

"अनुभवस्य विषयः खल्वियं 'रम्यता', न पुनर्निर्वचनस्य।"

"न भयम् । प्रयतताम् तावद् भवान् । अतीव मनोहारिणी प्रतिभाति मे खल्वेतद्विषयिणी चर्चेयम् ।"

"किं निर्वचनं क्रियेत रम्यतायाः ? यद् वस्त्वेकदा दृष्ट्वा मुहुर्मुहुस्तदेव द्रष्टुमाकुलम्भवेद् जनस्य चेतस्तदेव रम्यमिति शक्यं निगदितुम् । कायस्याऽऽवरणभूता खल्वियं त्वक्, तस्याः पृष्ठतश्च संगृहीतः खलु प्रचुरो मांसराशिरस्य रामणीयकस्य सर्वातिशायिनी उपादाने । आवरणभूतायां त्वचि विद्यते कापि निसर्गविधारिता पिण्डसंग्रहणक्षमता नाम । तावन्मितो मांसराशिस्तस्मिन्नावरणे संगृहीतः स्यात्तर्हि तेन कायस्था त्वग् आतता भवति । तन्वी चापि भवति । किञ्च समुद्भवति कापि पारदर्शकता तस्याम् । तदैव शरीरं रम्यं प्रतीयते । एतदुक्तम्भवति यच्छारीरिकस्य सौन्दर्यस्य मुख्यः खल्वाधारः शारीरिकं स्वास्थ्यम् । शारीरिकेण स्वास्थ्येन खल्वेतेन साकं शरीरसीमाव्यञ्जका रेखाः खल्वपि सुव्यवस्थिता भवेयुः, तासामनुपातः खल्वपि साधीयान् भवेत् तर्हि किं वक्तव्यम् ? तदा तु काञ्चनेन सञ्जातो मणिसंयोग इति वक्तव्यं भवेत् ।"

"कस्तर्हि साधीयाननुपातो नाम ?"

"शृणु । विज्ञापयामि । उत्तरौष्ठपट्टिकायास्तं बिन्दुं, यं खलु नासिकाया अधस्तनी भित्तिरेखा स्पृशति, मध्यबिन्दुं मत्वा ऋजुं खल्वेकामूर्ध्वरेखां शरीरस्योपरिष्टाद् भागाच्छरीरस्याधस्तनं भागं यावत् कृषाण । शरीरं खलु तदा द्वयोर्भागयोर्विभक्तं भविष्यति । दक्षिणो भागः खल्वेको, वामो भागः खल्वपरः। यदि दक्षिणभागगतानामवयवानामायामः, परिणाहः, स्थौल्यम्,

उच्छ्रायः, अवश्रायः, वर्तुलत्वं, तिर्यक्त्वमित्येवमादयो गुणा यथास्वं वामभागगतानामवयवानामायामादिकैः सह संवदेयुस्तर्हि वक्तव्यम् अस्त्यनुपातः साधीयानिति । इयं तावत्सञ्जाता कथा कृत्स्नस्याऽपि शरीरस्य । प्रत्यवयवं खल्वपि वर्ततेऽनुपातस्य साधीयस्त्वम् । तत्राऽहं मुखमण्डलगतमनुपातमुपजीव्याऽल्पग्रन्थं किमपि वच्मि । उभयोरपि कर्णयोः प्रत्येकं कर्णस्य मध्यबिन्दुमादाय ह्युभावपि मध्यबिन्दू संयोजयति या, तादृशीमेकाम् ऋजुरेखां दिगन्तसमां कृषाण । एतेन मुखमण्डलं द्वयोर्भागयोर्विभक्तं भविष्यति । अधस्तनो भागः खल्वेक, ऊर्ध्वतनो भागः खल्वपरः । अथ हनूगतस्य भागस्याऽन्तिमं बिन्दुमादाय शिरोभागस्य चान्तिमं बिन्दुमादाय ऋजुमूर्ध्वरेखां खल्वेकां कृषाण । यत्र खल्वियं रेखा दिगन्तसमां रेखां स्पृशति, तत्र चेदियं समप्रविभक्ता भवेत् तर्हि मन्तव्यम् अस्ति मुखमण्डलस्याऽनुपातः साधीयानिति । स्थूलं खल्विदमनुपातस्य विवेचनम् । विस्तरेणैतस्याऽनुपातस्य विवेचनं मन्ये सुदुष्करं भविष्यति । अन्यदप्येकमस्मिन् प्रसङ्गे ध्यातव्यम् । मुखमण्डलस्य कस्यापि रमणीयत्वमरमणीयत्वं वा प्रायेणोत्तरौष्ठपट्टरचनामाश्रित्य तिष्ठति । उत्तरौष्ठो यावानेव मांसलः, पुष्टः, ऐच्छिकतोपेतश्च भवेद्, अर्थात् दन्तैराकृष्टः सन् दीर्घतरं कृष्यमाणत्वशीलो भवेत्, तावानेव शोभनः सम्प्रधार्यते । उत्तरौष्ठपट्टिकाया व्रश्चनं, तक्षणं च यावदेव सुव्यवस्थितं स्यात्, तद्गता त्वक् यावत्येव स्निग्धा, मृद्वी, रोचिष्णुश्च स्यात्, तावदेव मुखमण्डलं सुरम्यं प्रतिभास्यति ! किञ्चैतत्सर्वमहं त्वदीयाया उत्तरौष्ठपट्टिकाया रचनां विलोक्यैव वच्मीति सर्वथा ध्यातव्यम् ।" एतदुक्त्वा खल्वहं व्यहसम् ।

ऊर्मिलाऽप्यहसत् किञ्च हसन्त्येव वक्तुमारभत—"ममाऽवयवरचनामेवोद्दिश्य भवानिमान् सौन्दर्यशास्त्रनियमान् प्रणयतीत्येवं प्रतिभाति।"

"अयि भद्रे, परमार्थतस्तु यस्य यदेव हि मधुरं भवेत्, तदेव तावदुद्दिश्य स नियमान् प्रणयिष्यति। एवन्तु नाम किमस्ति तद् यद्रम्यं नास्ति? सर्वमेव तावद्रम्यं, मनोहरं च। अत्र खलु तद्रामणीयकमनुभवितृ हृदयमेव केवलमपेक्षितं भवति। 'गुणा गुणज्ञेषु गुणा भवन्ति; ते निर्गुणं प्राप्य भवन्ति दोषाः।' इति यदुच्यते तदेव खल्वत्राऽनुसन्धातुमुचितम्। रामणीयकं यत्रैकतो वस्तुनिष्ठं, तत्रापरतस्ततोऽप्यधिकं द्रष्टृनिष्ठं तद् भवति। द्रष्टुर्यदि सुप्रियं किमपि प्रतिभाति तर्हि नहि सौन्दर्यशास्त्रगतेन सिद्धान्तशतेनाऽपि तदन्यथा शक्यते कर्तुम्।"

"सर्वं खल्वप्येतत् तथाकारं निर्विकारेण चेतसा मम पुरस्ताद् भवान् प्रतिपादयति, येन ममाश्चर्यमेवानुभूयते।"

तस्य तद्वचनमनाकर्ण्यैवाऽहमवोचम्—"बहुभ्यः संवत्सरेभ्यः कयापि रमणीयरूपाकृतिशालिन्या युवत्या सह यं विषयमहं सविस्तरमचिचर्चिषम्, तमेवोपजीव्य त्वया सह चर्चा विधाय नूनं कृतार्थोऽस्मि सञ्जातः। एतद्देशीया न काचिदप्यपरा युवतिरस्मिन् विषये चर्चाया अवसरं प्रादास्यज्जातु। त्वं धन्याऽसि। त्वया सहाऽऽलप्याहमात्मानं धन्यं कलयामि। नूनं त्वं पूजनीयाऽसि। अभ्यर्हिताऽसि। आराधनीयाऽसि। न पुनस्त्वमसि साधारणी मानुषी; किन्तर्हि देवी वर्तसे।"

ऊर्मिलाया मुखमण्डले पुनरपि सञ्चचार लज्जाया गाढम् अरुणत्वम्। सा दृष्टिं स्वकीयामधः कृत्वा समतिष्ठत।

अहं तस्यामेव मनोभूमिकायामभ्यदधाम्—"त्वं रमणीयाऽसि। सुमधुराऽसि। त्वदीयेषु वचनेषु प्रवहति महतो महान् माञ्जुल्यौघः। नैतेन लोकेन खल्वभिसम्बध्यसे त्वम्। तेन लोकेन खल्वभिसम्बध्यसे, यमधिगन्तुं जनेन न केवलमेकजन्मगामि, किन्तर्ह्यनेकजन्मगामि तपश्चरणीयं भवति। त्वम्..."

मध्य एव विनिवार्य सा मामीषत्सङ्कोचसंवलितेन स्वरेणाऽब्रवीत्—"किं खल्विदं सर्वं भवान् वक्तुमुपक्रान्तवानस्ति—नाहं किमपि पारयाम्यवगन्तुम्।"

तस्या वाचमिमामाकर्ण्य किञ्चिदहं प्राप्तसंज्ञः समभवम्। उत्साहातिरेकजनितं मदीये मस्तिष्के किमपि सञ्चलनमुदभवज्जातु। तत्फलस्वरूपमेव किञ्चिदपर्यवस्थिता समपद्यत मदीया खल्ववस्था। तत्कालमेवात्मानं पर्यवस्थितायामवस्थायामानीयाऽहमवदम्—"नान्यत्खलु किञ्चित्, किन्तर्हि स्वकीयहृदयगतान् काँश्चिद् यथार्थोद्गारानेव प्रकटीकरोमि स्म!"

"अद्भुतः खल्वेव भवान्।" सा किञ्चिद् हासमङ्गीकृत्य प्रावोचत्।

"किमिदम्? किं त्वं मदुक्तां स्तुतिवाचं निशम्य विचलिताऽसि सञ्जाता?

"नाहं किमपि बुध्ये। किञ्चिद् व्यामिश्रमिव वाक्यजातम्—विचित्रः शब्दप्रयोगः—न जाने, किं भवान् वक्तुमीहते। भवान् मां स्तौतीत्येतावत्त्वहं बुध्ये। परं नास्मि भवद्विहितायाः स्तुतेर्भाजनमहम्। अहं तावद् यावदपि स्वकीयं मनोगतं सर्वथाऽऽविष्कृत्य भवतः समक्षमुपस्थापितवत्यस्मि। तत्सर्वं

निशम्याऽपि भवान् मां देवीं, पूजार्हाम्, अभ्यर्हितां वा मन्वीत चेद् भवदीया गुणविषयिणी कल्पनैव तर्हि सन्देहभाजनं स्यादिति वक्तव्यं भवेत् ।"

तस्या इदं वचः समाकर्ण्याऽहं हासपरवशः समजाये। नाहं प्राभवम् तं हासं विनियन्तुम् । मस्तिष्कगतं किञ्चिदन्यदेव केन्द्रमिदानीमपर्यवस्थितावस्थायां समापतज्जातु । अहं साट्टहासमहसम् ।

"किं कारणं भवतो हासस्य खल्वस्य ?" ऊर्मिला किञ्चित् चिन्ताग्रस्तेन स्वरेणाऽभ्यदधात् ।

"किमपरं कुर्वीय नैव हसेयम् चेत् ? त्वदीयानि वाक्यानि सर्वथा मर्महर्षं सञ्जनयन्ति मम ।" अहं भूयोऽप्यात्मानं विनियम्य प्रावोचम् ।

"एवं किम् ?"

"ओम् । एवमिव । भवतु । अथ चलितव्यमिति मन्ये । अस्तं गतः सूर्यः । अवतमसप्रसरणात् पूर्वमेव गन्तव्यानि स्वस्थानानि।" अहमभ्यदधाम् ।

ऊर्मिलाऽकथयत्—"ब्रह्मन् पण्डितमहाभाग, भवता सहाऽऽलप्य सुमहान्तं परितोषमुपलब्धवत्यस्मि । अनेकैर्दिवसैः संवर्धितो मदीयो मनोरथोऽद्य पूर्त्तिं गतः । अनयैव रीत्या भवता सहात्रैव स्थिता सती सुदीर्घकालं यावद् आलपन्त्येवाऽऽसीयेत्यभिलाषः सञ्जायते । स्थानमेतदुत्सृज्य स्थानान्तरं गन्तुं लेशेनापि नैवाऽनुमन्यते चेतः । किं प्रत्यहं सन्ध्याभिमुखमस्यामेव वेलायां मया सह सँल्लपितुमत्र समागमिष्यति भवान् ?"

तदीयं प्रश्नमेतमाकर्ण्यैकपद एव स्वर्गतलाद् भूमितलमापत-

महम् । एतत्तावदासीदावेदनं प्रणयनिबन्धनं नाम । कुसुमलक्ष्मीं स्वजोवनसहचरीं कर्तुं दत्ताभिवचनोऽहमावेदनं खल्वेतदङ्गीकुर्यामि चेत्कीदृशो भवेन्मे घोरतरोऽपराधः ? एतावता काँश्चित्क्षणान् मनस्यालोच्याऽहं किमप्यतीव गभीरया गिरा प्रत्यभाषे—"अद्यतनस्याऽऽतिथ्यस्याऽतिमात्रं बृहत्प्रतिमूल्यं मादृशमकिञ्चनं जनं याचसे । तस्मात् क्षमायाचनापुरस्सरं यदि मदीयमसामर्थ्यं व्यक्तीकुर्यामि तर्ह्यप्रीतिं तावन्नैव भजिष्यते त्वदीयं मनः ?"

"हन्त भवानपि···"

साऽकस्मादेव सर्वथा ह्यप्रत्याशितं क्रन्दस्फोटं प्रत्यपद्यत । तथा प्रत्यपद्यत, यथा पार्श्ववर्तिनां जनानां मनांसि तां प्रति सहजमेव समाकृष्टानि भवेयुः । तस्या अपि मस्तिष्कगतं केन्द्रं किमपि सपद्येव व्यद्रुह्यदिव जातु । स्थितिः सर्वथा ह्यकल्पनीया समजायत । परम् ऊर्मिला नैवाऽशक्नोद् आत्मानं विनियन्तुम् । अहं भृशमिवोद्विग्नः समजाये । लपितञ्चापि मया तदीये कर्णमूले—"त्वरितमेव पर्यवस्थापयाऽऽत्मानं; नोचेद् निष्कारणमेव 'दृश्यं' विनिर्मितं भवेत् । पार्श्ववर्तिनो जनाः परिवारयेयुश्चेदावां, नूनं विषमः समुत्पद्येत ।"

सा स्वात्मानं पर्यवस्थापयितुं प्रारभतैव तदा, यदा नाम कश्चन वर्षिष्ठो महाभागस्तत्र समुपस्थितः । स मामन्वयुङ्क्त —"किं सञ्जातम् ?"

अहं निःशब्दः समभवम् । तथाकारमात्मानं दर्शितवान्, यथा नैव किमपि तदुक्तं मया श्रुतम्भवेदिति ।

"किं सञ्जातं वत्से," स महानुभाव ऊर्मिलामन्वयुङ्क्त

—"किमर्थं रुद्यते ?"

ऊर्मिला नैव किमपि प्रत्यवदत् ।

अत्रान्तरेऽन्य एवैको जनस्तत्र समायात् । असावप्यूर्मिलायाः क्रन्दनस्य कारणमपृच्छत् । अनयैवोपक्रमणिकयेतोऽपि केचन जनास्तत्र समागच्छन् । यत्रैवं त्रिचतुरा जनाः समवेता भवन्ति, तत्र ह्यचिरेणैव लोकानामकारणसङ्कटः प्रत्युत्पद्यते । अहमपश्यम् तत्राऽऽगतानां जनानां क्रमेणोपचीयते संख्येति । एतेन खल्वहं सर्वथाऽऽतङ्कितः समभवम् । स्वस्थानादुत्थायोर्मिलां गृहं प्रतिनिर्वर्तितुं प्रार्थये ।

प्रथमं समागतो वृद्धो मामपृच्छत्—"को भवान् ?"

किमप्यनपेक्षितः खल्वयं प्रत्यैयत प्रश्नः । तत्रापि च नैवाऽहमजानाम् मम विषये निश्चितं किमसावजिज्ञासतेति । तस्मात् समजायत तदुत्तरप्रदानाय केषाञ्चित्क्षणानां विमर्शविलम्बः ।

अन्यः खल्वपि जनोऽपृच्छत्—"भवानत्र क्व निवसति ?"

अहमस्यापि प्रश्नस्योत्तरं व्यमृशम् ।

अपरः खल्वेको जनोऽपृच्छत्—"इयं भवदीया का ?"

अस्य प्रश्नस्याप्युत्तरं व्यमृशम् ।

एतदालोक्याऽन्यतरः खल्वेको महाशयोऽवदत्—"कस्मान्निःशब्दं स्थीयते ? कुतो न पृष्टस्य प्रविवचनं विधीयते ?"

अहमवदम्—"किं करिष्यति भवानेतत्सर्वं विजिज्ञास्य ?"

अत्रान्तरे जनसमूहाभ्यन्तरात् कश्चनाऽब्रवीत्—"नाऽकस्माच्छाण्डिली मातर्विक्रीणाति तिलैस्तिलानि'त्यतः ।"

एतावता कालेनोर्मिला सर्वथा प्रकृतिमापद्यत । यदा खल्वविनयमिदमशृणोत्, तदा नोदसहत सा तदनुमन्तुम् । क्रोधाध्माता

सतडित्कडत्कारं साऽब्रवीत्—"कुतो भवन्तः? नास्ति किं व्यवसायान्तरम्? गच्छन्तु। पश्यन्तु चापि स्वीयं स्वीयं करणीयजातम्। What a pack of obstinate donkeys for men!"

तस्या वाण्यामासीद् विद्युत्कडत्कृतिरिव कापि, यां निशम्य श्रोतृणां श्रुतिरन्ध्राणि धन्धनायितानि समजायन्त। तस्यास्तत् तेजस्वि मुखमण्डलं—नूनं द्रष्टव्यं वस्त्वासीत्तदानीम्। सा मार्गं प्रदातुं जनानादिशद् मां चाऽभाषत—"चलतु।"

साऽग्रतो बभूवाऽहं च तस्याः पृष्ठतः। जनानां सम्मर्दो निःशब्दमपससार तस्मात् स्थानात्। यावता मराठीभाषाभाषिणौ खल्वावामास्व ततो नहि कश्चनापि सविशेषं किमप्यावयोर्विषये शशङ्के। उद्यानवनात्तस्मान्निष्क्रम्याऽऽवां पुष्परथे समास्वहि। इदानीमहमग्रवर्तिन्यासन एवोर्मिलायाः समीपमासि।

चलितुं प्रवृत्ते पुष्परथे सा मामभ्यदधाद्—"अप्यपश्यद् भवान् कथं यथाजाता भवन्तीमे जना इति?"

"अहन्तावदबिभयमेव सर्वथा।"

"कुतः खलु?"

को वेद, मां विपरीताचारवन्तं मत्वा निष्कारणमनुचितं व्यवहरेयुरित्यतः।"

तत्प्रथमं साट्टहासं जहास सा। उवाच चापि—"एवं तर्हि? भवान् बिभेत्यपि? एतेन भवदीयः स्वचित्तवैमल्यनिबन्धनो नास्ति सम्पूर्णं विश्वास इत्यवधार्यते।"

"कालः खल्वेष साम्प्रतिकस्तथाविधो, यत्र ह्यनपराधेष्वपि जनेष्वपराधं शङ्कमाना नैव सङ्कोचस्य लेशमप्यनुभवन्ति जनाः।"

अहमवदम् ।

"आस्तामिदम् । इदमुच्यतां भवतो मनस्यपि कदाचित् स्त्रीणां विषय आकर्षणादिकं किमप्युत्पद्यते न वा ?"

"नैव प्रतिब्रयामिमं प्रश्नमुचिततरमेव तर्हि स्यात् !" अहं सस्मितमवदम् ।

"कुतस्तावत् ?" साऽपि सस्मिता समजायत ।

"यावता न मामन्यथाभावेन बुध्येथास्त्वमिति ।"

"साधु साधु ! शोभनं किल व्याहरति भवानपि ! अहं स्वात्मगतानां वासनानामनावृतं चित्रं भवतः पुरस्ताद् आविरकुर्वं तर्हि मां देवीं, पूजनीयाम्, आराधनार्हां, साधनार्हां—न जाने, किं किं वक्तुमारभत भवान् । अथ यदि भवान् स्वात्मगतानि वस्तून्याविष्कुर्यात् तर्हि भवन्तमहमन्यथाभावेन प्रतिभोत्स्ये— हन्त, हन्त !"

"तर्हि मदीयमिदं प्रतिवचनमाकर्ण्य नैव किं मदीयमन्तर्गतं मनः क्षमसे त्वं ज्ञातुम् ? सर्वाण्यपि वस्तूनि किमभिधयैव प्रकटी-कर्तव्यानि भवन्ति सर्वदा ?"

इदं मदीयमुक्तं श्रुत्वा सा खल्वेकपद एव प्रादुर्भूतरोमाञ्चा समभवत् । नैव विषेहे सा मम लोचनाभ्यां स्वकीयं गात्ररोमाञ्चं निगूहितुम् ।

ईषत्स्मयमानवदनस्तामहमवोचम्—"ऊर्मि, विकारविवशेव प्रतिभासि त्वम् । स्वान्तःप्रवृत्ते मानसिके द्वन्द्वयुद्धे नैव तावच्छीघ्रं स्वीकर्तुमुचितमात्मनः पराभवम् ।"

" 'तावच्छीघ्रमि'ति कथमर्हति भवान् वक्तुम् ? कियता खलु द्राघीयसा कालेन द्वन्द्वयुद्धमिदं प्रवृत्तं वर्तत इति प्रागेव

न्यवेदयमहम् । कियन्तं कालं काऽप्यबला युद्धे खल्वस्मिन्नविचलिता रिपुं प्रतिभटिष्यतीति भवानाशास्ते ?"

एतदुक्त्वा सा स्वकीयेन वामेन पाणिना मदीया दक्षिण-हस्ताङ्गुलीरगृह्णाद्, अतीव मृदुलतया च ताः पीडयितुं प्रववृते ।

अहमकथयम्—"नूनमतिमात्रं मृदुलस्पर्शस्ते हस्तः ।"

सा खल्वितोऽप्यधिकया शक्त्या तथा कर्तुमारेभे । प्रोवाच चापि—"अपि परमार्थतो वक्ति भवानिदम् ? वरम् । एतत्ताव-न्निर्दिशतु कीदृश्यहं प्रतिभामि भवन्तम् ?"

"अतीव भद्रा किञ्चातीव मधुराऽपि ।" अहमपि मासृण्यो-पेतया वाण्या प्रत्यवोचम् ।

"अथेदानीं भवानस्मदीयमावसथमागमिष्यति न वा ?" साऽपृच्छत् ।

"नेदानीमहं कामये तवाऽऽवसथं गन्तुम् । रुचिरतरं भवेद् यदि मां तत्रैव प्रापयेस्त्वं, यत्राहमेषु दिवसेषु निवसामि ।"

"ओम् । समीचीनं खल्वेतत् ।"

नानाविधेभ्यो विषमतरेभ्यः सङ्कटेभ्यः परित्रातुमात्मानं सा मदीयमिदं निवेदनं सहर्षमङ्गीचकार । तत्कालमेव सा पुष्परथ-मुखं व्यावर्तयाञ्चक्रे । न वेद्मि कैः कैः पथिभिर्गच्छन्ती सा प्रापयद् मां मल्लेश्वरगतं सुपरिचितं मार्गम् । सर्वथा कुसुमलक्ष्म्या गृहद्वारस्य सम्मुखमानीयास्तम्भयत् तं पुष्परथम् । द्वारपक्षावन्त-र्भागेनाऽर्गलितावास्ताम् । सा पुष्परथगतं शङ्खकर्णकं[1] दध्मौ । अचिरादेव द्वारमपावृतं; कुसुमलक्ष्मीश्चापि नितरां प्रहृष्टवदना

---

१. शङ्खकर्णकः='भोंपू' इति भाषायाम् ।

बहिरायात्। आवां पुष्परथादवातराव। ऊर्मिलां दृष्ट्वा कुसुमलक्ष्मीः स्मेरमुखी सञ्जाता। सोर्मिलामपृच्छत्—"काय ग, हे कुठं भेटले तुला?" (अयि, क्व खल्वयं महाभागस्त्वया सम्प्राप्तः?)

"आज दिवसा आमच्या घरीं आले होते आमचे पाहुणे म्हणून" (अद्यायं महाभागोऽस्मदीयमावसथं सम्प्राप्त आसीत् प्राघुणिको भूत्वा।)

द्वयोरप्यनयोर्वार्तालापेनाऽनेन परस्परं घनिष्ठं खल्विमे परिचिते स्त इति स्फुटमजायत। एकस्यैव तावन्नगरस्य निवासिन्याविमे। पितरौ खल्वपि तयोर्मित्रभावमुपागतौ। सर्वथा शक्यमनयोरन्योन्यस्याऽऽवसथं प्रति गमनम्। तस्मात् कुतो न भवेदनयोस्तावान् घनिष्ठः परिचयः!

आवां गृहाभ्यन्तरे प्राविशाव। अन्धकारः प्रसरति स्म। विद्युद्दीपं प्रज्वाल्य मामभि पश्यन्ती कुसुमलक्ष्मीः प्राह—"अहं तु सर्वथाऽविभयमेव। अहमालोचयम् भवदीयमागमनं भविष्यति वा न वेति।"

अहमस्मये।

ऊर्मिलाऽपृच्छत्—"कुतः?"

"तादृशमेव किमप्यासीत्। ह्यो रात्रावेष महाभागो मदीयः प्राघुणिक आसीत्। अद्य युष्मदीयः समपद्यत। अस्य महाभागस्य किं नश्यति? यश्चनापीमं प्राघुणिकत्वेन स्वीकुर्यात्, तस्यैवायं प्राघुणिकः सम्पद्यते।"

सविहासमूर्मिला प्राह—"कुसुमलक्ष्मि, अतीव सूक्ष्मवीक्षिकया स्वभावादिकं खल्वस्य महाभागस्य वीक्षितवत्यसीति प्रतीयते। त्वमिमं तावन्मात्रं परिचिनुषे। कथं कुत्र चानेन सह

घटितस्ते परिचयः ?"

"कियानपि कालः खल्वनेन सह परिचयं गताया मम। एकस्मिन्नहनि गृहाभ्यन्तरोऽस्मदीयो जलप्रणालको निरुद्धतोयागमः समजायत। तदाऽहं पानीयाहरणार्थं बहिः स्थितं लोकजलप्रणालकमगच्छम्। तत्रैवाऽस्य महाभागस्य प्रथमं सन्दर्शनम्। तस्मिन्नहनि नवागन्तुकः सन्नयमस्य नगरस्य खल्वतिथिभावं गतः। इदानीमस्त्ययं ममाऽऽवसथस्याऽतिथिः।"

साकूतं निभाल्य कुसुमलक्ष्मीमूर्मिलाऽब्रवीत्—"त्वं हि ममात्यन्तमन्तरङ्गमैत्रीमुपागता सख्यसि। किमहमेकमर्हामि प्रष्टुम् ?"

"कुतो नार्हसि ?"

"सत्यं भण। इदानीमेष महाभागस्त्वदीयस्य हृदयावसथस्याप्यतिथिभावं गतो वा न वा ?"

"मदीयस्यैव किं कस्यापि जनस्य खल्वयं हृदयावसथस्याऽतिथिभावं गन्तुमर्हति। तवाभिमतं स्यात् चेत् त्वमप्यस्मै स्वकीये हृदयावसथे स्थानं प्रदातुमर्हसि !"

अहं तूष्णीं स्थितः सन् सर्वमिदमश्रृणवम्। कुसुमलक्ष्म्या मुखमण्डलमवालोकयम्। अवालोकयम् मुखमण्डलमूर्मिलायाश्चापि। उभयत्रापि निसर्गेण कर्त्रा समानभावेन, मुक्तहस्ततया च विकीर्णमासीद्रामणीयकम्। उभयोरप्यार्यत्वम्, उभयोरपि तेजस्वित्वं किञ्चोभयोरपि रूपलावण्यमभिनन्दनीयमासीत्। प्रत्येमि स्म चापि यां प्रच्छन्नां शक्तिं जगदिदं 'नारायणे'ति पदेन व्यपदिशति, तस्या एव शक्तेर्मूर्त्तस्य बृहत्स्वरूपस्य द्वौ लघुखण्डौ खल्विमावत्र मम सम्मुखं स्थित्वा परस्परमभिभाषेते इति।

'ऊर्मिला' किञ्च 'कुसुमलक्ष्मीरि'ति केवलमभिधानप्रभेदो, गात्रप्रभेदश्च । न पुनर्वस्तुप्रभेदः । कथं खल्वर्हति भवितुं वस्तुप्रभेदः? एकमेव तावद्विद्यते जगद्गतं तच्चिरन्तनं 'चिज्ज्योतिर्यं'द्धि कृत्स्नमपि दृश्यमानं संसारप्रपञ्चजातं स्वात्मना खल्वभिज्वलितं करोति ।

ऊर्मिला प्रावोचत्—"सखि, कुसुमलक्ष्मि, स्वकीये खल्वन्तःकरणे कस्मा अपि जनाय स्थानस्य प्रदानं वा ह्यप्रदानं वा न मानवीयप्रयत्नाधीनं, किन्तर्हि निसर्गप्रेरणाधीनं तद्भवति । वयं खल्वात्मप्रेरणया न तावदर्हामः कस्मैचिदपि स्वकीये हृदये स्थानं दातुं, न चाप्यर्हामो गृहीतस्थानं कञ्चिदपि तस्मान्निःसारयितुम् । भवतु । त्वं चेदस्मै महाभागाय दत्तवत्यसि स्वहृदये स्थानं तर्हि नूनं श्लाघनीयभागधेयाऽसि त्वमित्यहं सर्वथा प्रभवामि वक्तुम् ।"

"धन्यवादाः सन्तु मदीया ऊर्मिले !"

"धन्यवादानां खल्वेतेषां कृते प्रतिधन्यवादाः सन्तु मदीयाः कुसुमलक्ष्मि !"

तदनु मामभिमुखीभूयोर्मिला प्रावोचत्—"भवतु । पण्डितमहाभाग, अनुमतिः प्रार्थ्यत इदानीं गन्तुम् ।"

"त्वदीयं पितृपादं प्रति विज्ञापनीया खलु मदीया कृतज्ञता । न विस्मर्तव्यम् । भृशमुपकृतोऽस्म्यहं तव ।" अहमवदम् ।

"पण्डितमहाभाग", ऊर्मिला वक्तुमुपचक्रमे—"यावत्यपि ममायुषि प्रथम एवैष खल्ववसरो, यदाहं स्वान्तःस्थितान् भीष्मोपद्रवकारिणो मनोभावान् कस्मिंश्चिदपि पुरुषे प्रकटीकृतवत्यस्मि । एष हि प्रारब्धविपाको नाम यत्स प्रथमः पुरुषो भवान्

प्रत्यपद्यत । भवदीया स्मृतिर्मदीये हृदयपटले चिररात्राय सुस्थिरा स्थास्यति ।"

सा गत्वा पुष्परथे न्यषीदत् । पुष्परथं प्रवर्तयन्ती मामभिमुखं विलोक्य खल्वेतावदेव सा प्राभवद् वक्तुम् "बरंय्, येते." (वरम् । साधयामि पुनर्दर्शनाय ।)

पुष्परथश्चचाल । अहं निरवर्णयम् पर्यश्रुणी समजायेताम् तदीये नेत्रे इति । अश्रुबिन्दू निर्गलनपरायणावेवास्ताम् । परं महताऽऽयासेन सा तौ तत्रैव न्यरुणत् । तथापि क्षमते स्म किं स्थातुमविदार्य मदीयं मर्म सुतीक्ष्णेनेव शल्यक्रियोपकरणेन केनापि तयो रोचिष्णुता ?

## एकादशः समुच्छ्वासः ।

नानाविधाभिरपूर्णताभिराक्रान्तं कृत्स्नं खल्विदं विश्वम् । अपूर्णता खल्वेवास्य विश्वस्य व्यवच्छेदको धर्मः । नूनं पदमपि पुरः सर्पितुं नाशक्ष्यद् विश्वगतं नाटकमिदं यद्यत्राऽभविष्यत् सद्भावः पूर्णतायाः । सर्वे खल्वपि जनाः सर्वथाऽपूर्णाः स्वान्तरङ्गे । न खल्वेकतरोऽपि पूर्णः । महतो महतः पुनरेतान् अपूर्णतौघान् प्रतिपद्य यदपि किञ्चित् तत्त्वमित्युपलभ्यते, तदेतदेव यत्सर्वाण्यपि खल्विमान्यपूर्णताक्रान्तानि पिण्डानि मिथः समवेतानि परस्परस्य परिपूरकाणि जायन्ते । यस्यापि वस्तुनः सद्भावो नास्त्येकस्मिँस्तदेव खल्वपरस्मिन् पदार्थे दृष्टिगोचरीभवति ।

नास्ति यद्वस्त्वपरस्मिँस्तदेवान्यतरस्मिँश्चक्षुर्विषयतां याति। एवमिह सर्वेषामपूर्णता सर्वेषां समवाये पूर्णतायां परिणता भवति।

कृत्स्नस्याप्यस्य जीवनस्य द्वौ पक्षौ भवतः। पुरुषपक्षः खल्वेकः, स्त्रीपक्षः खल्वपरः। उभौ खल्वपीमौ पक्षौ स्वात्मन्य-पूर्णौ। इतः स्त्री स्वात्मन्यपूर्णा, ततः पुरुषः खल्वपि स्वात्मन्य-पूर्णः। इमामपूर्णतां परिजिहीर्षन्तौ द्वावपि खल्विमौ परस्पर-स्याऽपरिहार्यतां पश्यतः। तस्मादेव स्त्री पुरुषं प्रति, पुरुषश्चापि स्त्रियं प्रति तीव्रमाकर्षणमनुभवति। यदि सर्वोऽपि जनोऽर्धनारी-श्वरस्वरूपोऽभविष्यत् किञ्च स्त्रीपुम्भावौ यौगपद्येन, सामाना-धिकरण्येन चास्थास्यताम् तर्हि जात्वेष सद्भावोऽपूर्णताया नामशेषतामगमिष्यत्। यावता सर्वथा विपर्ययो वस्तुस्थितेर्दृग्गो-चरो भवति ततो जगति स्त्रीपुरुषपक्षयोः परस्पराश्रयं प्रेम तावदुपचीयमानं प्रत्यक्षीक्रियते।

अथवा नावश्यं स्त्रीपुरुषपक्षसापेक्षा एवाऽपूर्णता भवन्ति; किन्तर्हि तन्निरपेक्षा व्यक्तिमात्राऽवस्थायिन्योऽपि ता भवन्ति सद्गुणाभावलक्षणाः। नाहं खल्वप्यासम् ताभिर्विरहितः।

सर्वथा परिचिता आसन्मम मदीया अपूर्णताः। नूनं कुसुमलक्ष्म्या अभवद् मयि भावबन्धः। तथा दृढं बद्धभावाऽपि नाभवत्सा तपस्विनी परिचिता मदीयाभिरपूर्णताभिः, मदीयाभिः स्वभावशबलताभिः, मदीयाभिश्चात्मविसंवादिताभिः सह। किञ्च नहि शक्नोति कश्चनाप्येतावता स्वल्पकालिकेन परिचय-बलेनावगाहितुं कृत्स्नतया शबलं कस्यापि स्वभावौघम्। तस्मादेव कारणाद् यदाऽहं कुसुमलक्ष्म्यास्तां निरागसाम्, अबोधां

किञ्च मुग्धमनोहरां मूर्त्तिमपश्यम्, सर्वथा द्रवितहृदयस्तदा समभवमनुक्रोशातिशयेन। मनस्येवालोचयम्—हन्त, कथं खल्विमाः स्त्रियः पुरुषाणामभावे सर्वथा निःसहायाः प्रतिपद्यन्ते ? पुरुषेभ्यस्तास्तथा सलालसं स्पृहयन्ति, यथा कञ्चिदपि पुरुषं सर्वथैवाऽविचारेणाऽन्धभावेन च समाश्रयन्ते। किञ्च तथा तस्मिन् सानुरागा भवन्ति, यथा नैव पारयन्त्यात्मानुरागभाजननिबन्धनां गुणदोषविषयिणीं चर्चामपि कर्णगोचरीकर्तुम्।

नूनमहमप्यासम् बद्धभावः कुसुमलक्ष्म्याम्। किञ्च गभीरादन्तःकरणाभ्यन्तरादासोदुत्थिता तद्विषयिणी मदीया स्पृहा। परम् अप्रत्याशितमवतरणमिदमूर्मिलायाः किमपि विचित्रमेवान्दोलनं मनस्युद्भावयामास। किं नूनमूर्मिलाऽप्यभवत् कुसुमलक्ष्मीरिव मय्येव बद्धभावा ? किञ्चैकान्ततो मय्येव ?

परं कस्मात्खल्वेष भ्रमोदयो विमोहयेद् बुद्धिं मदीयाम् ? यदि कश्चिदुन्मानयेत्तुलामादाय मां च कुसुमलक्ष्मीं चापि तर्हि मन्ये सर्वथा समानोन्मानावेवाऽऽवां भवेव। कुलेन, विद्यया, गुणैः, स्वभावेन, रूपाकृत्या, वपुषा चापि सर्वथा समानावेवाऽभवावावाम्। परम् ऊर्मिला ? तया सह मदोया नासीत्तलनैव काचित्। योग्यतया सा मामतिक्रम्यातिष्ठत्। विद्ययाऽपि मत्तोऽधिका। कुलेन खल्वपि। रूपस्य तु कथैव का ? नासीत्काचिदियत्ता रूपलावण्यस्य तस्याः। क्व नु तदीयं तदप्रतिमं रूपलावण्यं क्व च पुनर्मदीयं हीनप्रभमिदं रूपम् ? एतावता, एतादृश्यां सत्यां खल्वसमानतायां कस्मादेष भ्रमौघो बुद्धिं मे विमोहयेत्—सा मयि बद्धभावा भवतीति ? परं यदि नासीत्सा मयि तादृशी बद्धानुरागा, कोऽर्थस्तह्यश्रुपर्याकुलयोस्तदीययोर्नेत्रयोस्तयोः ?

आत्मानमेवोद्दिश्याऽन्वयुञ्जि—"ब्रूहि भोः, किं कामयसे त्वमूर्मिलाम् ? यदि सैव स्वेच्छया त्वामुपागच्छेत् तर्हि दास्यसि किं वासं तस्यै ह्यात्मनो हृदयकक्षाभ्यन्तरे ? करिष्यसि किं तामात्मीयाम् ?"

परं मामेव प्रत्यपृच्छद् मदीयोऽन्तरात्मा—"कस्मात् खल्वेष मामुद्दिश्य प्रश्नोपन्यासः ? किञ्च भोः, दुर्गतो, द्रविणहीनः कश्चिदपि सत्त्वः स्वयमुपलभ्यमानं राशीभूतं किमपि महनीयं द्रविणं शक्नोति किं तिरस्कर्तुम् ? अत्र हि पात्रत्वापात्रत्वनिबन्धनो विवेकः कीदृशः ? अपात्रं खल्वपि नैव किं पात्रजनसम्पर्काद् गच्छता कालेन स्वयमेव याति पात्रताम् ? तथापि क्व तज्जातीयका सा, क्व चैतज्जातीयकस्तत्रभवान् ? तस्मादनभ्युपाय एष भवदीयस्तद्विषयो निरर्थको बुद्ध्यवगाहातिशयः ।"

× ×

अत्रान्तरे कुसुमलक्ष्मीर्गृहाभ्यन्तराद् मम समीपे समागच्छत् । तस्याः खलु मुखमण्डले पूर्ववदेव विलसति स्म हासः—भ्रमरविमोहको हासः । तां विलोक्यैवाऽन्तःकरणाभ्यन्तरमान्दोलनं तदल्पप्रमाणं सर्वथा शान्तं समजायत । निरमीयत चापि स्निग्धमाधुर्योपेतं किमपि सजीवं वातावरणम् ।

अहं कुसुमलक्ष्मीमपृच्छम्—"कुसुमलक्ष्मि, मम गमनानन्तरं किं त्वमबुध्यथा नैवाहं भूयः समायास्यामि त्वां साक्षात्कर्तुमिति ?"

"किञ्चिद् भयमासीन्नाम मे तथाजातीयकम् ।"

"किं मत्तः ?"

"नैव तावत् । पितृव्यपादतः । परं सर्वथा निष्प्रयोजन-

मासीद् मदीयं तद्बूयमिति तत उत्तरकालमवागम्यत । अहं पितृव्यपादं मनसा समभावयम् सर्वथा शुष्कस्वभावम्, अरसिकम्, अतिधार्मिकं, कठोरान्तःकरणं च । परमित्थं प्रतिभाति भवत्सम्पर्कवशात् तादृशमद्भुतं सम्पन्नं किमपि, येन ह्येकपद एव परिवर्तितस्तस्य प्रकृतः स्वभावः ।

भवन्तम् ऊर्मिलाया गृहे विसृज्य स सरलं ममैव गृहम् आयात् । सुचिरमश्लाघत भवन्तम् । स व्यजिज्ञपद् भवान् यशवन्तपुरार्यसमाजप्रधानमहाभागस्य तद्गृहवासार्थं प्रदत्तमप्यामन्त्रणमस्वीकृत्य पितृव्यपादेन सार्धमेव निवासं बह्वमन्यतेति । भवदीयमिमं निर्णयमाकलय्य भृशं समतुष्यदसौ । धनिकैः सादरं प्रदत्तमामन्त्रणं परित्यज्य निःसाधनानां गृहगतमातिथ्यं बहुमन्यमानो नूनं विरल एव भवति भवादृशो जनः ।"

"अन्यदपि किञ्चिदुवाच किम् ?"

"अथ किम् ? तदेव तावच्छ्रावयितुं प्रवृत्ताऽस्म्यहम् । सस्मितवदनः सन् मामपृच्छद्—'वत्से, कदा प्रभृति परिचिनुषे त्वं विकासमहाभागम् ?' प्रथमं तावदप्रत्याशितात् खल्वेतस्मात् प्रश्नात् किञ्चित्साध्वसमिवाहं प्रत्यपद्ये । नाहमवाबुध्ये तदीयमाशयम् । परं तस्य वदने तद्विधं स्मितं विलोक्य भीतिर्मदीया दूरमपयाता । तथापि नाहमपारयम् प्रश्नमेतं प्रतिवक्तुम् । भूयोऽपि पप्रच्छ माम् पितृव्यपादः—'वत्से, सत्यं ब्रूहि किमतिमात्रं रोचते तुभ्यं विकासमहाभागः ?' तस्यैतं प्रश्नमाकर्ण्य सर्वथा समभवमहमधोवदना सङ्कोचातिशयेन । एकदा कथन्तु नाम स्वमुखमुन्नमय्य पितृव्यपादं प्रत्यवालोकयम् । चक्षुषी तदीये कुसृत्युपेतेन हासेन केनापि पूर्णे आस्ताम् । भूयोऽपि सङ्कु‌को-

चाऽहम् । सकृदेव मूकस्मितपरिपूर्णाभ्यां चक्षुर्भ्यां तमवलोक्य तत्समनन्तरमेव भूयोऽप्यधोमुखी समजाये । तावन्मात्रेणाऽसौ सर्वमप्यवाबुध्यत काण्डम् । किञ्च सविहासमब्रवीद्—'वत्से, नाहमवेदम् यत्त्वमेतादृशी निपुणाऽसि सञ्जाता । अहं समभावयम् इतोऽप्यस्मदीया कुसुमलक्ष्मीः शिशुरेव भवेदिति । न खलु कर्णो-पकर्णिकया विदितमप्यस्माभिस्तावद्, यावत्त्वं स्वकीयस्य जीवित-स्य सार्धचरमपि निरवृणोः !'

पितृव्यपादो ह्येतादृशः सहृदयो भविष्यति किञ्चैतावद-धिकं वात्सल्यमाविष्करिष्यतीति नासीत्खलु मया चेतसाऽपि कृतम् । सपद्येव पर्यश्रुणी समजायेताम् लोचने । महता प्रयत्नेन निवारितावपि भूमावपततामेव द्वावश्रुबिन्दू । सञ्जातो रहस्यो-द्भेदः । स मां स्वकीये क्रोडान्तरे समाचकर्ष । अहम्पुनः सभाव-पारवश्यं, ससिसत्कारं च क्रन्दितुमारेभे । न वेद्मि कस्मादेतादृशेषु प्रसङ्गेष्वनीशो भवति जनो निरोद्धुं क्रन्दनावेगम् ! न किमपि प्रोवाच पितृव्यपादः । केवलमसौ वात्सल्यपरिगतेन स्वपाणि-पल्लवेन परामृशद् मदीयं मूर्द्धानम् । यदा खल्ववसितं मदीयं क्रन्दनं तदाऽसावब्रवीद्—'वत्से, अपि काचिद् दुर्निवारा चिन्ता पर्याकुलीकरोति त्वाम् ? जीविते खल्वेतस्मिन्नेवंविधा अनुराग-प्रसङ्गास्तु समुद्भवन्त्येव । जीवितस्य खल्वेतस्य निर्मितिरेवै-तादृशैः प्रसङ्गैर्भवति । तस्मात्कथं कश्चनापि जनः कुत्रापि पलायितुं शक्नोति जीवितगतानामेवंविधानां प्रसङ्गानां जटिलात् खलु यन्त्रपाशादात्मानमुन्मोच्य ? अतोऽहं ब्रवीमि नैव-मुद्विग्नया त्वया भवितव्यमेतादृशेषु परःसहस्रेष्वपि जीवित-व्यतिकरेषु । अवलम्बस्व धैर्यम् । सर्वं खल्वपि निरुपद्रवं भवेत्

परमेश्वरेच्छा चेद् भवति।' पितृपादमुखाम्भोरुहाद् बहिरायातानि प्रबोधवाक्यानि खल्विमानि नितरामपूर्वाण्यासन्। स मां निष्ठुरं भर्त्संयेज्जात्वित्यबिभयमहम्। परं भर्त्संनस्य स्थाने स मामुपसान्त्वयामास—उपलालयामास। ननु विकास, शकुन्तलां प्रत्यपि कण्वस्य महर्षेरेतादृश एवासीद् वात्सल्यपरिपूर्णो व्यवहारः खल्वमृतोपमः। नैव किम् ?"

एकाग्रेण मनसा खल्वहं तस्या भाषितमशृणवम्। सा भूयोऽपि वक्तुमारभत—"पितृव्यपादो मामब्रवीद्—'वत्से, बहुभ्यो दिनेभ्यो भृशं चिन्ताकुला आस्म वयं यस्मिन् विषये, तस्मिन् विषये त्वं स्वीयेनैवोद्यमेनाऽस्मान् निश्चिन्तान् व्यदधाः। एतेन बहुतरं खल्वस्मदीयं कार्यं स्वत एव समुपनतम्। दूरीभूतः खल्वस्मच्छीर्षे समाविष्टः सुमहान् दुर्वोढव्यो भारः। सुखिन्यास्स्व वत्से। विकासमहाभागं स्वहृदये निवेश्य न किमप्यनुचितमाचरः। उभावपि युवामन्योन्यशोभापरिवर्धकावेव।' एतदुक्त्वा स भवदीयां प्रशंसां भूयसीमकरोत्। अहमपृच्छम्—'क्व तिष्ठति स महाभागः साम्प्रतम् ?' स उवाच—'साम्प्रतं स सानेमहाभागस्य गृहे तिष्ठति। सानेमहाभागस्तमद्य बेंगलूरनगरगतानि दर्शनीयस्थानानि सन्दर्शयितुकामः स्वात्मना सह नगरपरिभ्रमणार्थं नेतुमभ्यलष्यत्। न चेदद्य श्वस्तावद् विकासमहाभागो नूनमत्र समायास्यति।' तदनन्तरं पितृव्यपादो स्वनिकायनिबन्धनानि कानिचिद् अवश्यकरणीयानि कृत्यान्यभ्यनुष्ठातुमना इतो निरगात्। किञ्चाहम् अनन्तसुखस्वप्ननिचयाकूपारनिमग्नेव भवदुपयानमुदीक्षमाणा समवातिष्ठे।"

कुसुमलक्ष्म्योक्तमेतद्वचः समाकर्ण्य कृत्स्नेऽपि मम गात्रे हर्षो-

पनीतः कश्चन सञ्चचार तीव्रो विद्युत्प्रवाहः । हन्त, अद्यावधि मनस्येव संवर्धिताः कियत्यः स्वर्गिक्यः कल्पनाः, कियन्तः स्वर्गिकाः स्वप्ना अद्य मम नेत्रयोः पुरस्ताद् वपुष्मन्त इव दण्डायमानाः समजायन्त ! इच्छामि स्म तावदानन्दमहापारावारस्योन्मादकरैस्तरङ्गै रेभिरेव परिवेष्टितः सन् सदातनाय कालाय तत्रैव निमज्जेयम्, तत्रैवात्मानं विलोपयेयमिति ।

प्रणयसम्बन्धिन्यो गाथाः खल्वनेका अहमश्रृणवम् । उपाख्यानपुस्तकानि खल्वनेकान्यपठम् । तत्रोपवर्णितं सर्वं खल्वपि प्रणयाचारमहमबुध्ये । प्रत्येकं कथा केनाप्यप्रत्याशितेन रुपसन्दर्शनेन नेत्रसङ्गमेन वा प्रारभ्यते । प्रणयगता गाढता किञ्चिदिवोत्तरोत्तरं संवर्धते । उभावपि पक्षावेकतरो वा कश्चित्पक्षः प्रणयनिवेदनार्थं व्याकुलो भवति । क्वचित्तदर्थं कृतो यत्नः फलवान् भवति, क्वचिच्च विफलः । किञ्च प्रकारेण खल्वनेन प्रणयनिबन्धना प्रच्छन्ना क्रीडा सर्वाऽप्यप्रच्छन्ना सञ्जायते । आकुलत्वं प्रवर्धते । पारस्परिकसङ्गमसम्बन्धिनः खल्वभ्युपाया विचिन्त्यन्ते । कदापि कालप्रेरणया तावुभावपि पक्षावन्योन्यस्य सर्वथा निकटे समागच्छतः । परं तस्मिन्नेवान्तरे तादृशं किमपि सम्पद्यते, येन सर्वथा सुदूरापास्तो भवति तयोः पक्षयोः सङ्गमः किञ्च प्रत्यूहाः खल्वनेकास्तत उत्तरकालं रोमाञ्चकारिणीमपि तां प्रणयकथां कस्यामपि करुणकथायां विपरिणमयन्ति । अन्ततश्च सा क्वचिच्छोकान्ता, क्वचिच्च सुखान्ता भूत्वा तत्कथोपाख्यानपाठकानां मनांस्यावर्जयन्ती पर्यवसिता भवति । परं मदर्थं नाभवदिदं सर्वमपि काण्डम् । सर्वं स्वयमेव सम्पद्यमानं किञ्च सर्वथाऽऽनुकूल्येन प्रवर्तमानमभवत् । प्रत्यैयत चापि नैष

कालः साम्प्रतिकस्तथाविधो, यत्र खल्वौपाख्यानिकाः सर्वेऽपि पूर्वतनाः प्रणयक्रीडानिबन्धनाः प्रत्यवायाः प्रणयिनो जनान् वृथा जर्जरयन्तीति। अन्यथा कथमयत्नेनैव कुसुमलक्ष्मीमहमध्यगच्छम् ? अन्यः कश्चनाऽभविष्यत्कालः, किञ्च कश्चन तदानीमिदमज्ञास्यद् यन्मम कुसुमलक्ष्म्याश्च वर्तते कोऽप्यसंशब्दनीयः सम्बन्ध इति तर्ह्यावयोरुभयोरपि मूर्धनि काचन महती सामाजिकी विपत्तिर्नूनं प्रत्यापतिष्यत्। उभावप्यावां समाजन्यायासनस्य समक्षं घोरतरापराधिनावजनिष्यावहि; किञ्च समाजोऽवश्यमेवोदग्रतरेण दण्डेन केनाप्यावयोरुद्वेजकोऽभविष्यत्। परमत्र तावत् सर्वं खल्वद्भुतम् ! सर्वं खल्वभूतपूर्वम् ! अत्र हि कुटुम्बवृद्धानामाशीर्वचसां राशिरिव पपातावयोरुपरि। नह्येव स प्राक्तनो दण्डो, न चाथ तत्प्राक्तनं भीष्मं दण्डप्रपतनम्। उभयमपि सर्वथा सुदूरापास्तमिव। नूनं सर्वं खल्वप्येतद् मदीये हृदये मर्महर्षं कमप्यवर्णनीयं सञ्जनयति स्म।

× ×

उभे अपि कुसुमलक्ष्म्याश्चक्षुषी विशिष्टाः काश्चित् प्रतिक्रियाः प्रतीक्षेते स्म मदीये मुखमण्डले। दिष्ट्या मदीयमुखमण्डलगता रेखास्तया सोत्कण्ठमभिलषितमेवाकारमादधते स्म। अहमपि तस्या अङ्गानां दशापरिणाममपश्यम् तदेकदृष्ट्या। सुचिरं तस्यामेवाऽवस्थायामहं समतिष्ठे। इदमेव भूयोभूयः समायाति स्म मदीये मनसि—पृथिवीगतैर्मृण्मयैरुपादानैः कस्मिन् शिल्पकर्मान्ते[1] निर्मिता भवेदियं सजीवविग्रहधारिणी प्रतिमा ?

---

१. शिल्पकर्मान्तम्=‘कारखाना’ इति भाषायाम्।

अधस्ताद् धरित्रीगतस्य शुष्कप्रायस्योपरिपृष्ठावरणस्य खल्वस्य किमेतावत् प्रचण्डं चैतन्यं कोषरूपेण सञ्चितं तिष्ठति ? तस्य महतः शिल्पविदो विद्युद्गुणविशिष्टाभ्यां हस्ताभ्यां शिल्पतूलिकायाःकीदृशः सञ्जातो भवेत् कमनीयः किञ्च सुकुमारतरः स्पर्शो मृत्तिकाप्रतिमायां खल्वेतस्याम् ? अत्र प्रसङ्गे कियानिव यथार्थः प्रतिभाति भगवद्गीताया एष श्लोकः—'आश्चर्यवत्पश्यति कश्चिदेनम्। आश्चर्यवद्वदति तथैव चाऽन्यः। आश्चर्यवच्चैनमन्यः शृणोति। श्रुत्वाप्येनं वेद न चैव कश्चिद्' इति। किमन्यद् भविष्यति न भविष्यति चेदाश्चर्यं खल्विदम् ? मृत्तिकायास्तावत्पिण्डमेतद्—इदं शरीरम्,—एष नरदेहः,—प्राणिदेहः ! परमाश्चर्यस्य साक्षात्प्रतिमे इव कुतः समागच्छताम् इमे द्वे नेत्रे तस्यां मृत्तिकायाम् ? गात्रत्वच उपरि कुतः समागच्छत् प्रभातरला कमनीया सौन्दर्यकान्तिरियम् ? किञ्चातीत्य सर्वाण्यप्येतानि, कुतः समागच्छत् तद् घनीभूतं, जीवननिबन्धनं, प्राणसन्तर्पणं,दिव्यमाकर्षणम् ? मृत्तिकया किन्तादृशं परिवर्तनमङ्गीकृतं, येन सा ह्येतावन्मात्रे सजीवे, स्त्र्यात्मके, नेत्रमनोहरे किञ्च ज्योतिर्मये खल्वस्तित्वे पर्यणमत ? सर्वं खल्विदमद्भुतम् ?

कुसुमलक्ष्मीः सस्मितनेत्रा मदन्तिकमागच्छत् किञ्चोभयोर्हस्तयोर्विरचितं सजीवं कण्ठहारं मदीये कण्ठेसमर्प्य समवातिष्ठत। शनैरिव मम ग्रीवामाधुन्वती सा मदीययोर्नेत्रयोः स्वकीये नेत्रे प्रत्यपातयत्। तदीययोर्नेत्रयोस्तत्कालिकं तद्दिव्याभं स्मितम् !—नूनं नितरामवर्णनीयमासीत्तत्।

"विकासमहाभाग," कुसुमलक्ष्मीर्वक्तुमुपाक्रमत—"अद्य कियती खल्वस्मि प्रसन्नहृदया ! सविशेषञ्च तदा, यदाहं

भवन्तमपि तावन्तमेव प्रसन्नं पश्यामि ।"

अहमवोचम्—"यत्सत्यमावयोरियं प्रसन्नता तस्याश्चापि विनिमयः पारस्परिकः—इमामानन्दस्य मात्रामनन्तगुणिताम् अनन्तविकसिताञ्च करोति।"

"कुतो न स्यादानन्दस्य तादृशो विकासो, यदा हि प्रत्यक्षं 'विकास' एव तत्र विद्यमानो भवति ?"

इमां वाचमाकर्ण्योभावप्यावां चकितौ समजायेवहि। छटात्कारेणावामन्योन्यस्माद् दूरतो भूत्वाऽतिष्ठाव। नासीद् अवधिरावयोर्विस्मयस्य, यदा ह्यावामपश्याव नायमासीत्कण्ठस्वरः कस्याप्यन्यतरस्य, किन्तर्ह्यूर्मिलाया एव।

अहं किमपि समकुचम्।

कुसुमलक्ष्मीः कुसृतिपरिपूर्णाभ्यां नेत्राभ्यामूर्मिलामवलोक्याऽपृच्छत्—"अयि, कुतः समापतस्त्वमत्रावयोरुभयोर्मध्ये ?"

ऊर्मिला प्रावोचद्—"अहं त्वदीयमहोभाग्यम् एताभ्यां स्वीयाभ्यां नेत्राभ्यां सकृद्विलोकनाय समायाताऽस्मि। नैव मन्ये त्वमतिमात्रं सन्त्रासिताऽसि कुसुमलक्ष्मि ?" एतदुक्त्वा सा साट्टहासं व्यहसत्।

अहमूर्मिलामवदम्—"काठिन्येन खल्वर्धघण्टा वा पादोनघण्टा वा भवेत् तवेतो गतायाः। तावता कालेन त्वं प्रत्यावृत्ताऽपि ?"

"कारणमिदं प्रतिपन्नं यद् मार्गाभ्यन्तरे मम जनकः समागच्छत् किञ्च मां भवद्विषयेऽपृच्छत्। भवन्तमस्मद्गृहम् अनीत्वैव भवदीयं गृहं प्रापयमहमिति विज्ञाय स भृशमकुप्यत् किञ्च तत्कालमेव व्यसृजद् मां भवन्तमानेतुम्। तस्मादिदानीं भवानस्मदावसथं प्रति चलतु। किं कुसुमलक्ष्मि, अद्यैकां रात्रि

शक्नोम्यहमाच्छेत्तुं त्वत्तो विकासमहाभागम् ? अपि वर्ततेऽनुज्ञा ?" ऊर्मिला साभिप्रायेण स्वरेण कुसुमलक्ष्मीमपृच्छत् ।

"अयि, किं परकीया वर्तसे त्वं मदर्थम् ? एष महाभागस्त्वद्गृहे निवसेद्, मद्गृहे वा; नास्ति कोऽपि विशेषः ।" कुसुमलक्ष्मीः स्वकीयमुन्मुक्तस्मितं कृत्स्नेऽपि वातावरणे विकिरन्ती प्राब्रवीत् ।

"समीचीनम् । तदिदानीं मन्ये सर्वथा स्वकीयं स्वापतेयमिव कलयसि त्वमेनं महाभागम् । यस्मा अप्यैच्छस्तस्मै प्रायच्छः । परं नाहमेनं त्वत्तः समाच्छिनद्मि । अतिमात्रं कोपपरीते पितरि नन्वहमेनं नेतुमेवं समागताऽस्मि । अन्यथा नाहमस्मिन्ननन्तगुणिते त्वदीय आनन्दे खल्वन्तरायमुदपादयिष्यम् ।" एतेनाऽपि खलूर्मिलोक्तेन वाक्येन निर्मलस्मितहसितशालिना वातावरणे विकीर्णो इवाऽपूर्वः कश्चिद् अनिर्वचनीयः कुसुमगन्धः ।

अहमूर्मिलामवोचम्—"त्वत्पितुः सम्मुखं नाहं प्रभवामि स्थातुं विगतसङ्कोचः । स हि प्राड्विवाकः । अतिप्रश्नान् प्रष्टुमारब्धे तस्मिन्, को वेद, कस्मिन्नहं प्रपतेयम् दुरुत्सार्ये निग्रहस्थाने !"

कुसुमलक्ष्मीरब्रवीद्—"अयि भोः, महाभाग, नैव जानाति भवान् । ऊर्मिलाया जनकस्तावदूर्मिलाया वशंवदः । अन्तरेणाऽस्या इङ्गितं नेङ्गते तत्रत्यं तृणपत्रमपि । अतिप्रश्नानान्तु कथैव का ?"

"तादवस्थ्येऽपि नास्म्यहं विगतसङ्कोचः ।" अहमवदम् ।

"मुञ्चतु सङ्कोचम् । अहं ब्रवीमि सर्वथा वीतसन्देहो

गच्छतु भवानूर्मिलया सह । यत्र खल्वियं भवत्प्रतिरक्षायै बद्धपरिकरा भवत्साकं तिष्ठति, तत्र कुतो नाम विपत्तेः कस्या अपि सम्भवः ?" कुसुमलक्ष्मीरब्रवीत् ।

"आ एवं किल तत् । एतत्सर्वं मदीयः खल्वस्ति चिन्ताविषयः । सर्वथा व्यपगतशङ्कस्तिष्ठतु भवान् । भवतु । आरुह्यतां खल्विदानीं पुष्परथः । नोचितो विलम्बः ।" ऊर्मिलायाः कण्ठे यत्सत्यमिदानीमविद्यत राज्यकर्तुं रेव स्वरः ।

भवतु । अहमूर्मिलया सहैव प्रातिष्ठे । कुसुमलक्ष्मीरपि पुष्परथान्तिकं समायात् । सा पुष्परथकपाटमावृणोत् किञ्च सस्मितवदना मां विसर्जयामास ।

प्रतस्थे तावत्पुष्परथः । बेंगलूरनगरं नासीत्तादृशं परिचितं मम, येनाहं जानीयाम् कैः कैर्वर्त्मभिः पुष्परथः क्व, कस्यां च दिशि प्रसर्पतीति ।

पुष्परथः प्रासर्पत् ।

किञ्च तथाविध एव पुरतः प्रासर्पत् ।

अहं सर्वथा तूष्णीमासम् । मम चित्तं तदानीं कुसुमलक्ष्मीनिबन्धनैरेव विचारैः परिपूर्णमासीत् । मदीयं ध्यानं, चित्तगताः सर्वा अपि क्रियाः, कुसुमलक्ष्म्यामेवैकताना अभवन् । शीघ्रमेवाहं निर्विकल्पसमाधिमिवान्वभवम् । किञ्च नैतदप्यबुध्ये यदहं पुष्परथासीनोऽस्मि; स च प्रसर्पति; रात्रिर्वर्तते; किञ्चाहं नगरगताभ्यो वीथीभ्यश्चतुष्केभ्यश्च सुदूरे निर्जने प्रदेशे क्वापि समागतोऽस्मीति । तादृशे प्रदेशे, यादृशे मदीयमागमनं मनसा खल्वपि नासीदवकल्पितम् ।

अहं तन्द्रामि स्म जातु । किञ्च पश्यामि स्म जातु कानपि

कुसुमलक्ष्मीनिबन्धनान् स्वप्नान् ।

परं···किमिदम् ?···किमिदम् ?···कीदृशः खल्वेष शब्दः ? ···हन्त, कश्चिन्मामेवाकारयति । किञ्च तथाकारमुच्चकैराकारयति, यथा मम श्रुतिरन्ध्रगता श्लेष्मकलैवाऽवदीर्णा सञ्जायेत ! किम् ? मदीयमेवाभिधानम् ?—'विकासमहाभाग, अयि भोः, विकासमहाभाग !' कोयं व्यतिकरः ?

अहमस्ततन्द्रः समजाये जातु । अपश्यम् कापि चिरण्टी पुष्परथं गृहीत्वा निर्जनभवनस्य कस्यापि द्वारि स्थिता वर्तते किञ्च मां स्वप्नात् प्रबोधयतीति । का पुनरियम् भवेद् ? बाढम् । विज्ञातम् । ऊर्मिलेयं साने इत्युपाह्वा ।

अहं प्रत्युदबुध्ये । उदमीलयम् चक्षुषी ।

ऊर्मिलाऽपृच्छद्—"अये किमस्वप्नाद् भवान् ?"

अहमवोचम्—"एवमेव प्रतिभाति किञ्चित् ।"

"तत्किं स्वप्नानपश्यद् भवान् ?"

"जातु ।"

"किन्निबन्धनान् स्वप्नान् ?"

"नाहमिदानीं स्मरामि । भवतु । अपि प्राप्तं त्वदीयं गृहम् ?"

"ओम् भगवन् ! इदं मदीयमेव गृहम् । प्राप्तं तिष्ठति । अवतरतु ।"

उभावप्यावां पुष्परथादवातराव । देशकालनिबन्धनः कृत्स्नोऽपि विवेको मम विलयं गतोऽस्तीत्येवं प्रत्यैयत ।

ऊर्मिला स्वकीयेन करेण मम स्कन्धमस्पृशद्, विहस्याऽवदच्चापि—"अहं भवन्तं बलादपहृत्य समानीतवत्यस्मि । नेदं

न रोचते भवत इति मन्ये ।"

"किमुक्तं 'बलादपहृत्ये'ति ?"

"ओम् भगवन् । बलादपहृत्य ! किञ्चेदमपि शृणोतु भवान् यदद्य कृत्स्नां रात्रिं भवता मदीये बन्धनागारे स्थातव्यम् । नेदं न रोचते भवत इति मन्ये ।"

"न खल्वहं किमपि बुध्ये । को वेद, किमिदं चिदम्बर-रहस्यमिति ?" तया साकं तद्भवनाभ्यन्तरे प्रविशन्नहमवोचम् ।

मदीयं कटिप्रदेशं कोमलया स्वभुजलतया पर्यावेष्टयाति-मात्रं मृदुलमधुरेण कण्ठस्वरेण प्राब्रवीत्—"दयित, अहं त्वां निगृहीतवत्यस्मि । किञ्चाद्य कृत्स्ना रात्रिस्त्वया मदीये बन्धनागार एव व्यत्यापनीया भवति ।"

"किमहमपाराध्यम् ऊर्मिले ?" अबोध इवाहमपृच्छम् ।

"कियन्तमिवाऽबोधमात्मानं दर्शयति भवान् ? न पुनरेता-वदपि बुध्यते भवान्, कश्चनापि पुरुषः स्वकीयेन मनोमोहके-नाऽस्तित्वेन कस्या अपि वधूट्याः किमपराद्धुं शक्नोतीति ? स यमपि सर्वातिशायिनम् अपराधं कर्तुं शक्नोति, तमेव भवान् मदीयमकरोत् । तस्मात्कं दण्डमर्हति तत्रभवानिति निर्णयपदे तत्रभवानेव प्रमाणम् ?" ऊर्मिलाऽब्रवीत् ।

"भवतु भवतु । सर्प तावदभ्यन्तरे । व्यवहारपदस्य खल्वस्य निर्णयस्त्वत्पितृपादेनैव कर्तव्यः ।" अहं सविनोदमवदम् ।

"क्वाऽत्रापि मे पितृपादः ?…किम् भवानिदं स्थानं यश-वन्तपुरं वा बेंगलूरं वा सम्भावयति ? इदं तावद् 'व्हाइटफील्ड' इति स्थानाभिमुखं प्रसर्पति वर्त्मनि स्थितं 'सुवर्णरश्मिरि'त्याख्य-मस्मदीयं भवनं भवति ।" उद्भिदती रहस्यभाण्डमूर्मिला

ग्रब्रवीत् ।

"हन्त, किमेतत्समाचरितं त्वया ?"

"कुत एतत् ? किम्मया समाचरितम् ?"

"ग्रन्याय्यम् ! किमन्यत् ?"

"ग्रन्याय्यम् ? ग्रपि खल्वेवं भवानाह ?"

"बाढम् । त्वं बलादिवाच्छिद्य कुसुमलक्ष्म्या मामत्र समानीतवत्यसि ।

"किञ्चातः ?"

"वेत्सि कियानुत्कटस्त्वन्निबन्धनः समादरो वर्तते मदीये हृदये ? मन्ये स्वीयेनैव कृत्येन व्यवस्यसि त्वं तं व्यपोहितुम् !"

"कदाऽहं भवन्तममन्त्रये मन्यताम् | मां भवाँस्तादृगादृत्यं वस्त्वति ? किञ्च कोऽयं समादरो नाम, यत्र खल्वादरभाजनस्य जनस्य यथार्थस्तु हृदयवीथीगतो मनोरथः सुतरामनादृत एव तिष्ठति ? ग्रहं प्रागेव निवेदितवत्यस्मि यथा लोकसाधारणशरीरधर्मशाली सामान्यः कन्यकाजनो भवितुमर्हति, तथैवाऽहं खल्वपीति । मदीये खल्वपि हृदये वासनानां तीव्रो ज्वालामुखः प्रदीप्यते; ग्रहं खल्वप्युरसि निर्दयं ताडितास्मि निशितैर्मन्मथशिलीमुखैः; किञ्चाद्यापि नैव तद्व्यथोपशमनोपायः केनापि विचिन्तित इति । परं नैव तदक्षिगोचरतां नीतं भवता । कः खल्वाशयो मदीयस्य वचनस्य भवितुमर्हतीत्यपि नैव प्रायतत भवान् विज्ञातुम् । किञ्च विपरीतमेव किमप्यालोच्य मदीये विषये मुधैव मामनयदाकृष्य कस्मिन्नप्यन्यस्मिँल्लोके । बलाच्च मामवाकल्पयदादृत्यं वस्त्वति । ग्रत्र मम को दोषः ? कथमेतेन मदीयमाचरितमन्याय्यमिति शक्यं वक्तुम् ?

"भवतु । आस्तामिदम् । प्रथमं निर्वर्तयतु भवान् स्नानादिकम् । अद्य भवदर्थं भोजनस्याऽतीव रुचिरमायोजनं कृतं वर्तते । चलतु । इदं पश्यतु । इदं स्नानगृहम् । अत्राऽयं शीतलजलप्रणालकः । अयमुष्णजलप्रणालकः । अत्र नागदन्तके स्थापयतु स्नानमनु परिधातव्यानि धौतवस्त्राणि । अथेतो भवान् सर्वाण्यप्यत्रत्यानि निर्वर्तयतु कृत्यानि । अहमन्यतः सर्वाण्यपि निर्वर्तयामि तानीमानि ।

× ×

अहमपश्यम् तस्मिन् स्नानागारे पुरतः पृष्ठतश्च विद्यते पुरुषारोह आदर्शः खल्वेकैकः । तयोरेकस्योपरि विद्यते रुचिरतरः स्नानतुषारवर्षो, यत्र ह्युभयविधस्य जलस्य प्रणालकावेकत्र संयोजितौ स्तः । तस्मान्निष्पततां तुषाराणामुपरि तीव्रस्य विद्युत्प्रकाशस्य योजना कृताऽस्ति । अहं शीतमुष्णं च जलं प्रायते समीचीने प्रमाणे मेलयितुम्, येन हि तत्सुखोष्णं प्रतिपद्येत । कदापि शीतलमधिकमजायत, कदापि चोष्णम् । परमन्तत उभे अपि जले उपयुक्ते प्रमाणे समागच्छताम् । किञ्चाहमासीनोऽभवम् तस्य सहस्रधारतुषारवर्षस्याऽधस्तात् पद्मासनं बद्ध्वा ।

विद्युतः प्रकाशे, तत्प्रकाशेन प्रतिफल्यमानास्ते सुखोष्णास्तुषारबिन्दवः पुरुषारोहादर्शस्य निर्मलच्छायायां तथा प्रत्यैयन्त, यथा स्वयं दिव्यज्योतिरेवाऽस्यास्तुषारधाराया रूपमाधाय मम सर्वेष्वङ्गेषु विकीर्यमाणमस्तीति, किञ्चाहं ज्योतिःस्नातो भवामीति मम बुद्धिर्भवेत् । का स्यादस्योपमा ? सूक्ष्मानुभूतिरपि किं कदाचिदर्हत्युपमाया विषयतां गन्तुम् ? साऽवस्था—यस्यां

न भवन्त्यतीतगताः स्मृतयो, न भवन्ति भविष्यद्गताश्चिन्ताः, वर्तमानः कालः खल्वपि यस्यां कतिपयेभ्यः क्षणेभ्यः स्वात्मानं विलापयति, किञ्च कस्मिन्नपि महति विस्मरणात्मके लोके प्रविश्य स्वात्मना जनः कस्यामप्यद्भुतायां सुखानुभूत्यां स्वकं कृत्स्नमप्यस्तित्वं विस्मारयति—जीविते खल्वस्मिन् कादाचित्क्येव । सा कदा, केन रूपेण, केन वा व्यपदेशेन समापतेदित्येतस्य नास्त्येव कश्चिन्नियमः । परमेत एव ते क्षणा भवन्ति, यानधिगत्य मानवजीवितवर्ती कृत्स्नोऽपि नीरसो बन्ध्योऽनुर्वरश्च भागो महतो महत आकर्षणौघस्य भूमिः सम्प्रतिपद्यते । कुतः खल्वेष मानुषः स्वकीयस्याऽस्य जीवितस्य विषये तावन्तमनुभवति बीभत्सं मोहम् ? एषामेव कतिपयेषां क्षणानां सद्भावात् । अपनीयेरँश्चेद्विस्मृतिनिबन्धना इम उन्मादकाः क्षणा मानवजीवितात्, किमवशिष्येत तर्ह्येतस्मिन् जीविते ?

यदि खल्विमे तुषाराः सर्वथा शीतला अभविष्यँस्तर्हि शरीरमशिशिरायिष्यत । यदि खल्विमे सर्वथोष्णा अभविष्यँस्तर्हि शरीरं वह्निदाहमन्वभविष्यत् । उभयथाऽपि शरीरस्य नैवाऽन्वभविष्यतानुकूल्यम् । अत्र प्रकरण उष्णत्वं शैत्यं च तादृशं कमपि सम्भेदमुपागते आस्ताम्, येन शरीरगतः प्रत्येकमवयवस्तयोः स्पर्शमासाद्याऽऽनन्दस्याऽनिर्वचनीयामनुभूतिं कामप्यनुप्राप्नोति स्म । जगदिदं नैव कामयत ऐकान्तिकताम् आत्यन्तिकतां वा । तत्कामयते समाधिम्, यत्र हि सर्वविधानामैकान्तिकानुभूतीनां सम्यग्रीत्या सम्यङ्मात्रायां चाऽऽधानं कृतं स्यात् ।

ऐकान्तिकं सौख्यं विश्वजीवनस्याऽभीप्सितं नास्ति । ऐकान्तिकं

दुःखं विश्वजीवनस्याऽभीप्सितं नास्ति। विश्वजीवनस्य ह्यभीप्सिता वर्तते साऽवस्था, यत्र न भवेत् सुखं, न भवेद् दुःखम्। सुखदुःखयोस्तादृशः कश्चन भवेत्सम्भेदो, येनोभयोरप्यनयोर्विस्मृतिं प्रतिपद्येत जनः।

जीवितं खल्विदं दृश्यमानं किमस्ति? सुखदुःखयोः सम्भेद एव। नैव किम्? कदाचिदपि कश्चिदपि जनस्तयोर्विभेदं घटयित्वा ते सुखदुःखे सम्भेदावस्थातः पृथगवस्थायामानयति, येन हि जीवितमिदं विक्षिप्तश्रृगालदंशिकया दष्टुमिवाऽभिधावतिं मानवम्। परं निसर्गः शीघ्रमेव तामव्यवस्थां व्यपोह्य जीवितमिदं भूयोऽपि प्रकृतिस्थं विदधाति। यदवलोक्य केचन जनाः समुद्गिरन्ति—'पीत्वा मोहमयीं प्रमादमदिरामुन्मत्तभूतं जगदि'ति। विश्वगत एष 'उन्मादो' नूनमेव वर्तते किं किमप्यनभिनन्दनीयं वस्तु?

× ×

स्नानागारे स्नानार्थं गतोऽहं सन्ध्यामेवोपासितुमारभे। ईश्वरस्तुतिप्रार्थनोपासनामन्त्रेभ्यः समारभ्य स्वस्तिवाचन-शान्तिप्रकरण-ब्रह्मयज्ञ-देवयज्ञेत्येवमाद्यन्तं यावत् सर्वानपि वेद-मन्त्रान् निष्प्रत्यूहं पठन्नेवातिष्ठम्। सहस्राधिकैः संवत्सरैः पुरातना इमे वेदमन्त्रास्तस्मिन् समये समस्तानपि सरहस्यानर्थान् स्वकीयान् प्रकाशयन्तो मम चक्षुषः पुरतो विनिर्गताः। 'ऋतञ्च सत्यञ्चाभीद्धात्तपसोऽध्यजायते'तीयं गूढा प्रहेलिका समस्तमपि रहस्यजातं स्वकीयमुद्घाट्य मम मस्तिष्कमार्गेण विनिर्गता। 'ऋतं,' 'सत्यम्', 'अभीद्धं तपः' इत्येवमादीनि वस्तून्यहं तेषां नैजे स्वरूपे प्रत्यक्षीकरोमीत्यन्वभूयत।

ननु शब्दानां न खलु वस्तुस्वरूपाविष्करणे, किन्तर्हि वस्तुस्वरूपनिगूहन एवाऽवलोक्यते परमः प्रयत्नः। अभ्युपगच्छामि तत्रापि विद्यते निरतिशयः कोऽप्यानन्दगुणः। आनन्दः खल्वेष तदैवाऽनुभूयते, यदा वस्तुनः स्वरूपं तावदात्मना शब्दौघविनिर्मितम् आवरणकवचं विदार्य बहिरागतं सत् प्रकाशितं भवति, किञ्च तत्स्वरूपनिगूहनायाऽऽपादमस्तकं प्रयतमानास्ते शब्दाः सर्वथा विफला, मोघप्रयत्ना च सञ्जायन्ते। परमार्थतो नैव वस्तुनः साक्षात्कारे, किन्तर्हि तदुपरि विद्यमानस्य दृढतरस्याऽऽवरणकवचस्याऽपसारणे किञ्च तदर्थं क्रियमाणेषु प्रयत्नशतेषु तिष्ठत्यानन्दः। नैवाऽभविष्यँश्चेद् वस्तुनः स्वरूपनिगूहने यत्नवन्तो बलिष्ठाः खल्विमे ह्यावरणकवचास्तर्हि वस्तुनः साक्षात्कार एव निरानन्दः समजनिष्यत। एतस्मादेव कारणाद् यावदन्तं सम्भवति, तावदन्तं शब्दाः खल्विमे वस्तुतः स्वरूपसंवरणायैवाधिकं यत्नवन्तो भवन्ति। अयमेव हेतुर्यदुपनिषत्काराः समामनन्ति—'परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः' इति।

अहमुच्चैर्जपितुमारभे—'परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः' इति। किञ्च निष्प्रत्यूहं तथैव जपन्नतिष्ठम्।

× ×

न वेद्मि कियान् विलम्बो जात इति। अहं तेनैव विधिना तस्य तुषारवर्षस्याऽधस्ताद् अचलसमाधिमुद्रायामतिष्ठम्। अन्यत्र तूर्मिला स्वकाः सर्वा अपि क्रिया निर्वर्त्याऽतिष्ठत्। सा निर्वर्तित-स्नानस्य मम बहिरागमनं सुचिरं प्रतीक्षमाणा नितरां विबाधिता समजायत। यदा खलु मर्यादामतीत्य गतं तदीयमधैर्यं, तदा स्नानागारद्वारमागत्य सा मामाकारयद्—"अयि भोः, महाभाग,

भवतोऽयं मन्त्रपाठः क्वापि समाप्तिमेष्यति न वा ? मम जठर-गह्वरे तावद् बलिभुजो गुरुतरं सांराविणं कुर्वते। बहिरायातु तावच्छीघ्रम् !"

"हन्त भोः, व्यस्मरमेव खल्वहं तत् ! क्षमस्व ऊर्मिले !" अहं हसन्नेवाऽभ्यन्तराद् उदतरम्।

वस्त्राणि परिवर्त्य स्वात्मानमहमादर्शे प्रत्यपश्यम्। तथा प्रत्यैयत यथा दिव्यं लोकं कमपि सम्प्राप्तवानस्मि किञ्च मृण्मयं शरीरं मदीयमिदं सुवर्णज्योतिर्मयं सञ्जातमस्तीति। अहं स्वयमेव स्वकीयं तद्रूपं दृष्ट्वा सस्मितवदनः समजाये। नूनं तद्विधमेवोन्मादकरं भवति तारुण्यम् !

बहिरागत्य स्वसम्मुखमूर्मिलामालोक्य सर्वथा समभवम् संस्तब्धसर्वेन्द्रियव्यापारः। मम सम्मुखं नैव खल्वेतस्य जडप्रायस्य भूलोकस्य, किन्तर्हि कस्याप्यमरलोकस्य कापि दिव्याङ्गना सुवर्णरसस्नातेव दण्डायमाना समतिष्ठत। अहं पुनस्तद्वन्निष्प्रत्यूहं, दृष्ट्या खल्वेकयैव तां प्रतिपश्यँस्तत्रास्तम्भे। अवरुद्धवाक्प्रसर इव। स्तब्धः सन्। ममाधरपल्लवे नासीत् स्मितं न चाप्यासीद् विस्मितम्। परमूर्मिला सहजसौकुमार्येणोवाच—"किं सञ्जातम् ?"

नाहं प्राभवम् तस्याः प्रश्नं प्रतिवक्तुम्। राजर्षिर्विश्वामित्रः समुत्थाय योगसमाधित, उन्मील्य च नेत्रे स्वकीये यदा स्वसमक्षं तादृशि निर्जनारण्ये तां त्रिभुवनमनोहारिणीं मेनकाख्यामप्सरसमुपस्थितां दृष्टवान् भवेत्, तदा नूनं तस्यापि सैव सञ्जाता भवेन्मनःस्थितिर्या खल्विदानीं मम समजायत। ऊर्मिला प्रत्यभ्यजानाज्जातु मदीयामिमां मनःस्थितिम्। सस्मितवदनाऽवदत्

सा—"चलतु। भोजनस्य विशिष्टमायोजनं प्रतीक्षते तत्र भवन्तम् !"

"अद्यतनः कृत्स्नोऽपि दिवसो भोजननिबन्धनानां विशिष्टायोजनानामेवाऽभवत्। तादवस्थ्ये, त्वमेव भण त्वदीयमेतत्कालिकं विशिष्टभोजनायोजनं प्रति कथमौत्सुक्यमर्हति मदीयम् भवितुम् ?" अहमवोचम्।

"मैवं खलु भवान् वादीत्। आयोजनं प्रत्यौत्सुक्यविरहः खल्वायोजनकारिणं प्रत्यौत्सुक्यविरहमाविष्करोति। तत्किमहं बुध्येय नास्ति मां प्रति कोऽप्युत्सुकीभावो भवतो मनसीति ?" स्वकीयायामाकृत्यां न कमपि भावान्तरावतारं प्रदर्शयन्ती प्राब्रवीदूर्मिला।

ऊर्मिलाया वचने खल्वेतस्मिन् नासीत् किमपि वैतथ्यम्। ऊर्मिलाया विषये कणिकामप्याकर्षणस्य वा ह्यौत्सुक्यस्य वा नैवानुभवामीति नासमहं वक्तुं प्रभुः। किञ्चैतत्प्रत्यनीकं यद्दिव्यं रूपमाधायेदानीमूर्मिला मम समक्षमुपस्थिताऽभूत्, तद्वीक्ष्य ताम्प्रति विद्यमानमाकर्षणमनुक्षणं बलवत्तरमेव समजायत। तथाप्यूर्मिलया पृष्टस्य प्रश्नस्यैतस्य त्वरया प्रतिवचनं नैव युक्तं किमपीत्यतीव सावधानतया खल्वहमवदम्—"त्वदीयं निवेदितं खल्विदं नास्त्यत्युचितम्। काममहं भवेयम् भोजनं प्रत्यनुत्सुकस्तथापि नार्हामि त्वाम्प्रत्यनुत्सुको भवितुम्। तथा कथनं मानवहृदयस्याऽयथार्थमाविष्करणं भविष्यति। परमार्थतस्त्वेतत्कालिकीं त्वदीयामलौकिकीं रूपप्रभां विलोक्य त्वन्निबन्धनस्यौत्सुक्यस्य मात्रा मदीया प्रवर्धत एवाऽनुक्षणम्। परमत्र केवलमेकमेव वस्तु मां हतप्रतिभं करोति। तत्किमिति चेद्—मदीया

तावदपात्रता । त्वदीयस्यैतस्य दिव्यतरस्य रूपवैभवस्य समक्षं समग्रमप्यस्तित्वं मदीयमकिञ्चनमिव सम्प्रजायते । त्वदीयां खल्विमां दिव्यतां वीक्ष्येतोऽपि मामकीनं मनस्त्वामिदमेवोपदेष्टुमिच्छति यत्त्वया कमपि दिव्यतमं पुरुषं प्रत्येव स्वात्मा···"

मध्य एव वचनाद्विनिवार्य मामूर्मिलाऽब्रवोद्—"आस्तामिदम् । मैवं भवानतिवादान् वादीत् । सम्प्रति सर्वथा निःशब्दो भूत्वा मया सहागच्छतु भवान् । इतोऽपि बहु समालपनीयं वर्तते । आदौ तावदशेषितः स्याद् भोजनव्यापारः । चलतु ।"

अथ नाहं भोजनमधिकमुपवर्णयिष्यामि । ऊर्मिला 'विशिष्टं भोजनस्यायोजनमि'ति यत्समशब्दयत्, तत्तथाजातीयकमेवासीत् । तस्माद् विनैव टिप्पणीदानं सर्वमपि भोजनकृत्यं पर्यवसितम् । उत्थाय हस्तादिकं प्राक्षालयम् । मुखं पर्यमार्जम् । किञ्च मुखशुद्धचर्थमेकस्याः प्राधारिकायाः सोपस्करान् षण्मुखपत्तनीयान् गुवाकखण्डान् उदतोलयम् । मुखाभ्यन्तरे निक्षिप्य ताँश्चर्वयन्नतिष्ठम् । ऊर्मिलाऽपि भोजनोत्तरकालिकं करणीयजातं परिसमाप्य मामुपासर्पत् । किञ्च मम पार्श्ववर्तिनीमासन्दीमेकाम् आकृष्य मत्तः किञ्चिदपसृत्याऽनतिदूरे तस्यां समुपाविशत् ।

अहं खल्वतीव शान्तेन वचसा तामपृच्छम्—"कीदृशीं पुनरिदानीं त्वं स्वकीयां मानसिकीमवस्थां कलयसि ? अतीव संक्षुब्धानां, सञ्ज्वलनपरिपूर्णानां च व्यतिकराणां मध्याद् इव त्वदीयं मनो निष्क्राम्यतीति लक्ष्यते त्वां दृष्ट्वा ।"

" 'लक्ष्यत' इति वचनमनर्थकम् । कृत्स्नमपि दिनमिदमेव तावदहं निवेदयामि । कस्मात्तथाकारमात्मानं प्रदर्शयति भवान्, येन किमपि गभीरतरं चिन्तनमनु भवानधिगच्छत्येनं निष्कर्ष-

मिति निष्कारणं कस्यापि बुद्धिः स्यात् ।

"निष्कारणं कस्यापि तादृशी बुद्धिः स्यादिति धिया किमप्यहं समाचरामीति नास्ति व्यतिकरः । चिन्तनं मम स्वभावधर्मं एव सञ्जातोऽस्ति कतिपयेभ्यो दिवसेभ्यः । यः कश्चनाऽपि मम सम्पर्के समायाति जनस्तन्निबन्धनं कृत्स्नमप्यहं सम्यक्तयाऽवगन्तुमीहे । भवतु । इदन्तावद् ब्रूहि, योऽयं 'विनोद'स्त्वया समाचरितो मया सह—कस्तत्र प्रयोजकः ?" तदीयं तद्रमणीयं मुखमण्डलं निभालयन्नहमपृच्छम् ।

ऊर्मिलाऽकथयत्—"अत्र सर्वत्राऽपि मम पितृपाद एव प्रमाणम् । अतिमात्रं विनोदप्रियः खलु सः । किञ्चैतत् तेनैव समाचरितस्य विनोदस्य रुचिरं खल्वेकं निदर्शनम् ।"

"अथ त्वमप्येतदनुमोदसे ?"

"ओम् भगवन् । अन्तरात्मानं साक्षीकृत्य ।"

"कुतः पुनरेतावती धैर्यशीला त्वं संवृत्ता ?"

"पितृपादानुग्रहात् ।"

"किमेतत्पूर्वमपि कदाचित् त्वत्पित्रेदृशो विहितः खल्वनुग्रहः ?"

"नैव भगवन् ।"

"कुतः ?"

"निवेदयामि । बहुभ्यो दिवसेभ्यो मम पितृपादः किमपि सुयोग्यं पात्रं मदर्थमन्वेषयति स्म । नैवाऽसौ समार्थयत मम गृहान्निर्गमनं केनाप्यपात्रेण सह । अद्य यदाऽसौ प्रथमतो न्यभालयद् भवादृशं सुयोग्यं पात्रं, तदा मामित्थं समाचरितुं प्रायोजयत् । किञ्च नास्ति विदितमिदं रहस्यं गृहगतानामन्येषां

केषामपि जनानामित्यप्यहमत्र भवन्तं निवेदयामि। न मातुर्नं चापि चम्पायाः।"

क आशयः खल्वेतेन विनोदेन तव पितुः ? नूनं किमसौ वाञ्छति ?"

"मदीयं मनःप्रसादम्।"

"एतदपेक्षया नासोत्किमन्यः कश्चिद्रुचिरतरः सदुपायः ?"

"नैव भगवन्।"

"त्वमप्येतदेव मन्यसे ?"

"ओम् भगवन्। अहमप्येतदेव मन्ये। अस्मिन् व्यतिकरे यदि नाभविष्यद् मदीयो मनःप्रसादस्तर्हि किं भवान् बुध्यते शक्यसम्भवमभविष्यदेतत्सर्वमिति ?"

"कुतस्तर्हि त्वत्पितृपादः प्रागेव नैतत्सर्वं मयि न्यवेदयत् ?"

"भीतिवशात्। कदाचिद् भवानिदं प्रत्याख्यास्यतीति।"

"नैव किमेतेन चित्तक्लेशं प्रतिपत्स्यते त्वदीया जननी ?"

"अविज्ञाते व्यतिकरे कुतः क्लेशप्रतिपत्तिः ?"

"कृत्स्नामप्येकां रात्रिं त्वं गृहाद् बहिस्तिष्ठेः सा चेदं नैव विजानीयादिति कथं शक्यं सम्भवितुम् ?"

"अयि भोः, भगवन्, ममापि पितृपादस्य दुर्विभाव्यं खलु लीलाजातम् ! मदीयस्य मनःप्रसादस्य कृते स किं किं नैव समातिष्ठेत् ? किं किं नैव समाचरेत् ? मातरं तस्याः सहेलिकयैकया साकं विश्वेश्वरपुरं प्रस्थापयामास। तत्र किल श्रूयते महान् कश्चन धार्मिकः समारोहः। तस्मादद्य सा तत्रैव स्थास्यति।"

"अथ चम्पायाः किम् ?"

"तामपि कटकसन्निवेशे समायोजितं सङ्गीतनृत्यसमारोहं कमप्यालोकयितुमात्मना सहैवानयत् । किञ्चाद्य रात्रौ तत्रैव नः सम्बन्धिनो गृहे तां विसृज्य स्वयं विश्वेश्वरपुरं प्रति मातुरभ्याशे गमिष्यति । तत्रापि कञ्चित्कालमतिवाह्य मातरं तत्रैव त्यक्त्वाऽसौ स्वयं यशवन्तपुरं प्रत्यायास्यति ।"

"दृष्टम् । कथमेकमपि शिष्टजनविगर्हितं कृत्यमाचरितुं नानाविधान् चित्रविचित्रान् विषमान् प्रतिपद्यते जनः ?"

"अयि भोः, महाभाग, नैव चेत्तद्विधान् प्रतिपद्येत विषमान्, कथन्तर्हि भवादृशमायत्तीकुर्याज्जनम् ?" एतद्वचनसमकालमेव सोदतिष्ठत् । तस्या मुखमण्डले खेलति स्मेदानीं नितान्तमधुरः कोऽपि कुसृतिपरिपूर्णो हासः । माधुर्योपेतया चञ्चलतया कयापि मम ग्रीवायां स्वकीयं हस्तमर्पयित्वा मामुपगूह्य सा प्राब्रवीत्— "दयित, कियानिव कुटिलः, कियानिव वक्रः, कियानिव चासि व्युत्पन्नश्चाटुकारस्त्वम् ?"

अहमपि भुजाभ्यां स्वकीयाभ्यां शनकैरेव तामावेष्ट्याऽवोचम्—"किमिच्छसि त्वमूर्मिले ?"

"न किमप्यन्यत् । विकास, अहं त्वामिच्छामि, किञ्चापीच्छामि त्वदीयमिदं सुस्निग्धं भुजावेष्टनम् ।"

सहजभावेन सा स्वकीयावोष्ठौ मम ह्योष्ठयोरुपरि न्यदधात् । कतिपयक्षणानन्तरं तावपसार्य ताभ्यामुन्मत्तवद् वक्तुमुपचक्रमे सा—"न किमप्यन्यत् । इच्छामि स्वकीयानां चिरन्तनोद्दामवासनानां पूर्तिम् ! तदनन्तरं···तदनन्तरं···न किमप्यन्यद्; ···इच्छामि स्वकीयस्य ज्वालामयस्य जगज्जीवनस्य खल्वस्य पर्यवसानं···पर्यवसानं त्वदीययोरेवैतयोर्भुजयोर्मध्ये ! विकास,

नैव त्वमिदं सर्वं···नैव त्वमिदं सर्वं काण्डमभद्रं सम्भावयिष्यसीति मन्ये !"

तस्यास्तामनुनयोपेतामिमां वाचमाकर्ण्य सहजमेव द्रवीभावं गतं मे हृदयम् । किञ्चाऽहं तस्या एतया वाचा सर्वथाऽभिभूतः समभवम् । नैतदपेक्षते पृथग् वक्तुम् । मदीयौ बाहू, यावदिदानीं यावत् किञ्चिच्छिथिलावास्तामशिथिलौ समजायेताम् । तस्यास्तत्पीनं वक्षो मदीयेन वक्षसा संसृष्टं समजायत । विचित्रेषून्मादकेषु क्षणेषु खल्वेषु व्यस्मरमहं यदहं 'विकासो'ऽस्मि । व्यस्मरमहं यदहं सक्तत्क्तप्रणयोऽस्मि कुसुमलक्ष्म्या । व्यस्मरमहं यदहमेतत्पूर्वमेव मय्यर्पितं सुकुमारतरं किमपि स्त्रीहृदयमित्थं निष्ठुरं प्रतारयामीति ।

"आः, विकास, कीदृशी प्रसन्नाऽस्मि खल्वद्य ?···कीदृश्यानन्दितास्मि खल्वद्य ?···कीदृशी सुखिताऽस्मि खल्वद्य !···" ऊर्मिला तस्यां निर्भरालिङ्गनवेलायां सहसाऽब्रवीत्—"अलमलम् । इदमेवाहमैच्छम्···इदमेव···नूनं कृतार्था समजाये ।"

सहसा मम नेत्रयोः पुरस्तादवतीर्णा कुसुमलक्ष्म्या निरागसा मूर्त्तिः । सा मामुद्दिश्य प्रोवाचेव—'विकास, त्वं मदीयोऽसि । मदीयः सञ्जातवानसि । तवोपरि वर्तते मदीयः प्रथमाधिकारः ।'

मदीयावशिथिलौ बाहू शिथिलावजायेताम् । प्रसुप्तमिव मदीयं चैतन्यं भूयोऽपि प्रबुद्धं समजायत । हठात् स्वकीयौ हस्तौ क्षमां याचितुमूर्मिलाया अङ्घ्र्याभिमुखं प्रेषयन्नहमवोचम्—"ऊर्मिले, नास्त्यधिकारो मे त्वद्वक्षःसमुपगूहनस्य । प्रयच्छ मे त्वदीयौ चरणौ । त्वं देवी खल्वसि । आराधनीया खल्वसि···।"

सन्निकृष्टावेवास्ताम् मदीयौ हस्तौ तच्चरणयोस्तदा, यदा

हि सविद्युद्वेगं सा स्वकीयौ चरणावपसारयामास किञ्चोभा-भ्यामपि स्वहस्ताभ्यां मामूर्ध्वं समुत्तोल्य स्वहृदयेन सह सङ्गमयन्ती प्रावोचद्—"मा मैवम्। मा वादीद् भवान् मां देवीति। अहं प्रज्वलन्तीनां वासनानां प्रतिमूर्त्तिर्मानुषी वर्ते। अद्य भवता मया सह तादृशं व्यवहर्तव्यं, यादृशं कापि मानुषी कामयते। उत्सृज्य देवभावस्य बहुमानं कदा तु नाम बहुमन्तव्यो भवता मानुषो भावः। कुसुमलक्ष्म्या अन्तरात्मानं प्रत्यनन्ताभिः क्षमायाचनाभिः सहितमद्याऽहं भवन्तं तस्याः समाच्छिद्याऽऽनीतवत्यस्मि। केवलमेकामेव रात्रिम्। न खलु बलात्; किन्तर्हि तदनुज्ञया। इदानीं भवदुपरि नास्ति कुसुमलक्ष्म्या अधिकारः। विकास, इमामेकां रात्रिं न भवसि त्वं कुसुमलक्ष्म्याः; भवसि त्वं केवलमूर्मिलायाः!"

×                    ×

मम जीवनगतानामनन्तानां स्वप्नानां साकारा मूर्त्तिः—स्विन्नप्रस्विन्नगात्री, श्लथविश्लथकबरीबन्धा, स्खलितविस्खलितवसनाङ्गभूषणा सा ह्यूर्मिला स्वकीयं कृत्स्नमपि देहभारं सम्पिण्डितं कृत्वा ममोत्सङ्गे निपतिताऽऽसीत्। अहं सकृत् तामपश्यम्। भूयोऽप्यपश्यम्। नाहं प्राभवम् खल्वात्मानं विनियन्तुम्। विद्युदालोके सूक्ष्ममुक्ताकणगणैरिव प्रकाशमानैरच्छिन्नैः स्वेदबिन्दुभिः समाचितं तस्यास्तदाभामयं मुखमण्डलं हठादचुम्बम्। ऊर्मिला स्वकीयाभ्यामर्धोन्मीलिताभ्यामर्धनिमीलिताभ्यां च नेत्राभ्यां मां विलोक्य निःश्वासमय्या वाण्या प्राब्रवीद्—"दयित, विकास, अहह, कियानिव कुटिलः, कियानिव वक्रः...कियानिव चासि त्वं व्युत्पन्नश्चाटुकारः!!!"

## द्वादशः समुच्छ्वासः ।

मदीययोर्भुजयोर्मध्य एवोर्मिला स्वकीयस्य ज्वालामयस्याऽस्य जगज्जीवनस्य समाप्तिं कामयते स्म । नैव किम् ? परं कथन्तदासीच्छक्यसम्भवम् ? यथा काश्चिद् 'विषकन्या' भवन्ति, तथैव 'विषकुमारश्चे'दहमभविष्यम् तर्हि कदाचित्तच्छक्यसम्भवमभविष्यदपि । परं क्वाऽऽसमहं तथाविधः ? किञ्च सत्यमेव मद्भुजयुगान्तरमागत्य विश्वगतमिदमनिन्द्यसुन्दरं जीवनं मृत्योर्ग्रासतामन्ववाप्स्यच्चेत्—?

अनया तावत् कल्पनयाऽप्यहं कम्पितहृदयः समभवम् । स्वपार्श्ववर्तिन्यामारामशय्यायां सुप्ताया ऊर्मिलायास्तत् प्रफुल्लकमलप्रसूनाभं मुखमण्डलमहमपश्यम् । हन्त, कियदिव निश्छिद्रं, कियदिव निर्मलं, कियदिव च निष्कलुषं—निरपराधं सौन्दर्यमासीत्तत् ! अत्यन्तं स्थिरगत्या किञ्च सपूर्णतालबन्धं प्रवर्तते स्म तस्याः श्वासोच्छ्वासः । तारुण्यपरिपूर्णौ तस्यास्तौ पीनौ पयोधरौ श्वसितप्रश्वसितेन खल्वनेन सहैव स्थिरतया कदाचिदुन्नतौ कदाचिच्चावनतावभवताम् । इदं वीक्ष्याऽतिमात्रमुच्छ्वसितं मे चेतसा यदितोऽपि जीवत्यूर्मिला । मृता नास्ति ।

श्वासोच्छ्वासात्मकाः कियन्त इव सुसूक्ष्माः सन्तीमे

प्राणतन्तवो, ये खल्वेतावन्तं बृहन्तं जीवितक्रमं स्वायत्तीकृत्य तिष्ठन्ति । किञ्चेदं जीवितमप्यगतिकमिव तेषामधीनं क्रीतदास इव विचेष्टते । परं किमिदं जीवितं केवलमाभ्यां श्वासोच्छ्वासाभ्यामेव निगडितं तिष्ठति ? नहि तावत् । श्वासोच्छ्वासावतीत्यापि विद्यमाने द्वे वस्तुनी शक्तिशालितरे भवतः । के पुनस्ते ? अत्यासङ्गो, ह्याशा च । अनयोर्वस्तुनोरभावे किमयं जीवितक्रमः प्रभवति पदमपि चलितुम् ? प्रभवति पलमप्यवस्थातुम् ? अत्यासङ्गः पुनः किन्निबन्धनः ? एतच्छरीरनिबन्धनः । आशा पुनः किंविषयिणी ? अन्तरात्मन्येव चिररात्राय संवर्धितमनोरथसहस्रसम्पूर्तिविषयिणी । मनुष्यः स्वकीये हृदयकक्षे मनोरथान् खल्वनेकान् निगूह्य स्थापयति। अतीव सुकुमारतया सम्पोष्य च तान् संवर्धयति । तेषां मनोरथानां पूर्ति प्रतीक्षमाणः स कृत्स्नमपि सङ्कटसहस्रमयं स्वकीयं जीवितं सुखेनाऽतिवाहयति । कदा तु नाम, कथन्तु नाम तदीया इमे सर्वे मनोरथाः सम्पूर्ति यास्यन्त्येवेति धारणा खल्वाशेति निगद्यते । किञ्चेमामेवाऽऽशामवलम्ब्य मनुष्यः सुचिरं यावत्स्वात्मानं सजीवं स्थापयितुं यत्नवान् भवति ।

अथ सुचिरं मनसि निगूह्य स्थापिता इमे मनोरथाः किं कदापि पूर्ति यान्त्यस्मिन् जीवित इत्यपरः प्रश्नः । तत्र हि पक्षद्वयं भवति । नैव यान्तीत्येके । यान्तीत्यपरे । कः खलु वेद किं नूनं भवति किं च नूनं नैव भवतीति ?

अहं प्रत्येमि स्म मदीय ऊर्मिलायाश्च—उभयोरप्यावयोश्चिरकालाद् मनस्येव संवर्धितो मनोरथोऽद्य पूर्ति गत इति । एतस्मादेव कारणाद् अहमात्मानं सन्तृप्तमिवान्वभवम् । किञ्च

यदोर्मिला नेत्रे उदमीलयद् अहं चापि तामवालोकयम्, तदा मदीय एव हृदयान्तर्गत आह्लादौघस्तस्या उभयोरपि चक्षुश्चषकयोः परिपूरितस्तिष्ठतीति प्रत्यभात् ।

यान्यपि जीवनगतान्यवश्यम्भावीन्यवस्थान्तराणि, तान्युभयथाऽपि शक्यानि द्रष्टुम् । निर्मला दृष्टिः खल्वेका, मलिना दृष्टिः खल्वपरा । आह्लादः खलु जीवनं प्रति निर्मलया दृष्ट्या वीक्षणस्य फलम् । मलिनयैव दृष्ट्या वीक्ष्येत चेद् विषादं पश्चात्तापं चापहाय किमन्यदवशिष्येत तर्हि जीविताभ्यन्तरे ?

ऊर्मिला प्रबुद्धा सती मां समबोधयद्—"विकास, अद्य कियन्तमिव मधुरं स्वप्नमहमद्राक्षमिति जानाति किम्भवान् ?"

"शृणुयाम् तावत्कीदृशः खलु स स्वप्न इति ।"

"ऊँ हुम् । नाहं तं भवन्तं श्रावयामि ।"

"भवतु भवतु । अपि वक्ष्यसि किन्निबन्धनः सः ?"

"भवन्निबन्धनः ।"

"तर्हि नैव श्रावयिष्यसि माम् ?"

"नैव नैव । नैव भवन्तम् ।"

"तर्हि..."

"कुसुमलक्ष्मीं श्रावयिष्यामि ।"

कुसुमलक्ष्मीनामश्रवणसमकालमेव सकलामपि मदीयां जीवनशक्तिं मत्तः कोप्यपजहारेत्यन्वभूयत ।

"कुसुमलक्ष्मीं त्वं किं किं श्रावयिष्यसि ?"

"यथाघटितं सर्वं श्रावयिष्यामि । किमिति किम्भवान् किमपि—"

अहं तां मध्य एव वचनाद्विनिवार्यावोचम्—"इदानीमपि

किमप्यवशिष्टं वर्तते कुसुमलक्ष्मीं श्रावयितुम् ? त्वं मां तस्या बलादाच्छिद्य—"

तत्कालं मम मुखं स्वकरेणाऽऽवृत्य साऽब्रवीत्—"तूष्णीं तिष्ठतु भवान् विकासमहाभाग, कुसुमलक्ष्मीर्मदीया बाल्यकालिका सखी वर्तते । सम्यक्तया जानाम्यहं ताम् । स्वप्ने यथा व्यवहृतं तथैव सर्वस्मिन्नप्यायुषि तया व्यवहर्तव्यम् । अपि जानाति भवान् किं किम्प्रतिपन्नं स्वप्नवेलायामिति ?"

"नाहं किमपि विज्ञातुमिच्छामि । ऊर्मिले, निर्वासय मामिदानीमेतस्मान्नगरात् । तादृशः कश्चनोपायश्चिन्त्यताम्, येनाहमस्मात्स्थानात्सुदूरं क्वापि निर्गच्छेयम् किञ्च नैव कदापि स्वकीयमिदमपराधपङ्किलं मुखं कुसुमलक्ष्मीं दर्शयेयमिति ।"

मदीयमन्तःकरणं पश्चात्तापवृश्चिकशतैर्निष्ठुरं दष्टमिवाऽजायत । किञ्च कुसुमलक्ष्म्या जीवितं प्रति समाचरितमिमं भीषणं दुर्मर्षणीयं च कपटाचारं स्मारं स्मारं तद् अभ्यन्तर एव क्रन्दितुमारभत ।

अथ कथमहं प्रकृतिं प्रत्यापादनीय इत्येवञ्जातीयको विकटः खल्वेकः प्रश्नः समुत्पन्नो नामोर्मिलायाः समक्षम् ।

"किमर्थं भवानेतादृशः प्रतिपद्यते विकास ? किमेतत्प्रत्येति भवान् यन्मदीयां प्रार्थनामङ्गीकृत्य भवान् स्वात्मानं कुसुमलक्ष्मीं प्रति घोरतरापराधिनं विहितवानस्तीति ? परं सशपथमहं ब्रवीमि मदीयं मनोरथं पूरयित्वा कुसुमलक्ष्मीं प्रति नैव कथमप्यपाराध्यद् भवान् । मन्ये नैव खल्वितोऽपि परिचिनुते भवान् कुसुमलक्ष्म्या हृदयम् । नैव किं स्मरति भवान् यदाहं भवन्तमुपनिमन्त्रयितुं कुसुमलक्ष्म्या गृहमागच्छम्, तदा मया सहागन्तुमस्वी-

क्रियमाणे भवति कुसुमलक्ष्मीः स्वयमेव मदीयं पक्षमाश्रित्य प्रावर्तयद् भवन्तं मया सह गन्तुमिति ? किञ्चैकां रात्रिं भवन्तमात्मना सह नेतुं कुसुमलक्ष्मीं नैवाऽयाचे किमनुज्ञाम् ? किञ्च नैवान्वमन्यत किं सा सहर्षमेतत्कर्तुं माम् ? कस्मात्तर्हि यत्नवान् भवति भवान् स्वात्मानमवसादयितुम् ?"

ओम् । यत्सत्यं नैव मया स्वात्माऽवसादयितव्यः । नासीत् खल्वेष प्रसङ्ग आत्मनोऽवसादनस्य; किन्तर्हि समुद्धरणस्यासीत् । तत्कालमेव महाभारतकारस्य महर्षेर्व्यासस्येदं वचनं मम मस्तिष्कपथमस्पृशत्—'उद्धरेदात्मनाऽऽत्मानं नात्मानमवसादयेद्' इति । इदमपि वचनं जीवितगतानेतादृशानेव प्रसङ्गान् लक्ष्यीकृत्य लिखितं भवेज्जातु ।

किञ्च तत्कालमेवाहं स्वात्मानं पर्यवस्थापयम् । मन्ये समाजगते वातावरणे विद्यमानानां केषाञ्चित् परम्पराप्राप्तानां सूक्ष्मसंस्काराणां किमपिकुचक्रमासीज्जात्वेतद्, येनहि कुतश्चिदपि समागत्य ते काँश्चित्क्षणान् मां पर्यभवन् । परं द्रागेव सञ्जातस्तेषां व्यपगमोऽपि ।

अहमूर्मिलाभिमुखमपश्यम् । तस्याश्चक्षुषी अभाषेताम्—'अपराध इत्याख्यं वस्तु विद्यते मिथ्या कल्पना खल्वेका । मानवजीवितगतः कश्चनापि क्रियाकलापः खल्वपराधो नैव भवति । यदपि किञ्चिद् घटते जगत्यस्मिन्, जीवितगताभिर्दुर्दमनीयाभिरावश्यकताभिः प्रयोजितं सदेव तद् घटते नाम । किञ्च दुर्दमनीया आवश्यकताः पुनरिमा भवन्ति जगन्नियामकशक्तीनाम् इच्छाः । सर्वं तासामेव प्रेरणया भवति । तादवस्थ्ये, कश्चनापि क्रियाकलापोऽपराधो भवतीति कथं कश्चनापि जनः

प्रभवेद्वा ह्यर्हेद्वा वक्तुम् ?' इति ।

अहमूर्मिलामवोचम्—"बाढम् । भूतार्थमेवात्थ त्वमिति प्रतिभाति ।"

"हन्त भोः, भवानपि कदाचित्तथाविधां भीषणां विरचयत्यात्मनो मुखाकृतिं, यां दृष्ट्वा भयेन कम्पितमिव जायते मे हृदयम् ।" ऊर्मिला स्वमनोगतमुद्वेगं न्यूनीकुर्वाणा प्राब्रवीत् ।

"नैष मम दोषः । एष खलु समाजगतानां संस्काराणां दोषो भवति, ये हि सुदूरं यावन्नैवमुञ्चन्त्यस्मदीयं पिण्डम् ।"

अहमासां भावनानां समाजसंस्कारप्रभवतामुपपाद्य स्वात्मानं किञ्चिन्निर्दोषं व्यपगतमनोभारं चाप्यन्वभवम् । आत्मशिरसि निहितं प्रभूततरं भारं स्वकीयेन शिरसा वोढुं समर्थः कश्चनाप्यन्यतरो भवति चेत्समीचीनतरमेव तद्भवति । यदा जनः स्वशिरःपतितं दुर्वहं भारं सर्वथा खल्वक्षमो भवति वोढुम्, तदा नाम समाजाख्यो जन्तुः स्वात्मानमग्रतो विधाय दुर्वहमपि तं भारं स्वकीयेन शिरसा वोढुं यत्नवान् भवति, येन हि भाराक्रान्तः स जनः कञ्चित्कालं व्यपगतभारो जायते । यद्येवं नास्ति तर्हि यदद्यतने युगे वयं पदे पदे प्रत्येकमपि जनं येन केनापि निमित्तेन समाजमेवाधिक्षिपन्तं पश्यामस्तस्य का व्याख्या शक्या कर्तुम् ?

"अथ विकास, न कमपि स्वप्नं भवानद्राक्षीत् ?" मधुरं विषयान्तरमङ्गीकुर्वाणा ह्यूर्मिलाऽपृच्छत् ।

"कुतो न ? यमहं स्वप्नमद्राक्षम्, तमितोऽप्यहं सम्यग्रीत्या स्मरामि । स त्वदीयां मातरं विषयीकरोति ।"

सा खल्वेकपद एवोच्चुकूर्दे तत्कालं पप्रच्छ चापि—"निवेदयतु कं स्वप्नं मम मातुर्विषये भवानद्राक्षीत् ? कीदृशं

स्वप्नमद्राक्षीत् ? भद्रं वा ह्यभद्रं वा ?"

इत्थङ्कारमहं तां स्वकीयं स्वप्नमश्रावयम्—

"आसीत् प्रभातकालः । गङ्गायास्तटेऽतिमात्रं स्वच्छाः शुभ्रा उज्ज्वलाश्च सिकताः सुव्यवस्थितमास्तीर्णा आसन् । एकतो नीलश्यामलवर्णा जलधारा ह्यन्यतश्च धवलोज्ज्वलाः सिकताः । अनतिदूर एवैको राजमार्गं आसीत् । अतीत्य तं राजमार्गमेकस्तडागोऽविद्यत । तस्य तडागस्योपकण्ठे काश्चन काष्ठशिला आसन् । एकस्यां काष्ठशिलायामुपविश्य द्वे वृद्धे महाराष्ट्रीयमहिले तस्य तडागस्य शोभामपश्यताम् । स्वमतमपि तद्विषये प्राकटयताम् । तडागस्य तटे क्वापि पाटलकपुष्पस्य[1] क्षुपो व्यराजत, यस्मिन् द्वे बृहती पाटलकपुष्पे अराजेताम् । तयोरेकं श्वेतम् अपरं च नीलमासीत् । तयोर्महिलयोर्दृष्टिस्तं क्षुपं प्रति समाकृष्यत । एका साश्चर्यमब्रवीद्—'अयि, पश्यस्यपि कथमेकस्मिन्नेव क्षुपे परस्परविरुद्धवर्णयोः पुष्पयोः सद्भाव इति !' अपरा प्रत्यब्रवीत्—'किमत्राश्चर्यं ? किमेकस्मिन्नेव मानवीये हृदये नैव विराजेते परस्परविरुद्धे द्वे भावने ? अयं क्षुपः खल्वस्मत्पुरतस्तस्यैव वस्तुनः सजीवं निदर्शनं प्रत्युपस्थापयति ।' अस्मिन्नेवान्तरे तडागे तस्मिन्नेकं हंसमिथुनं प्लवमानमदृश्यत । हंस आसीन्नीलाभश्वेतवर्णो हंसी चासीद्रक्ताभश्वेतवर्णा । तयोर्लक्ष्यीभूतयोः सतोः प्रथमा महिलाऽब्रवीद्—'अयि, अप्यपश्यस्त्वं तद् हंसमिथुनम् ? कीदृशं नयनरमणीयं प्रतिभाति तत् ?' द्वितीयाऽब्रवीत्—'हन्त भोः, नूनमेव तावत् । किमद्य सञ्जातं निसर्गस्य ?

---

१. पाटलकपुष्पम्='गुलाब का फूल' इति भाषायाम् ।

यत्रापि विलोक्यते, तत्रैव श्वेतश्यामयोर्मिथुनं दरीदृश्यते।' प्रथमाऽब्रवीत्—'त्वं स्वकीयायाः कन्याया विवाहं केनापि श्यामवर्णेन कुमारकेणैव साकं विधत्स्व। तावपि तथैव रमणीयौ द्रक्ष्येते यथेदं हंसमिथुनं दृश्यते।' द्वितीया प्रत्यब्रवीद्—'उचितमेव तावदेतत्। गौरश्यामयोरेव मिथुनं शोभावहं भवति।' तस्या एतद्वचनसमनन्तरमेव समागत्य तत्रैकः पुष्परथोऽतिष्ठत्। तस्य पुष्परथस्यैको भागः श्वेतोऽपरश्चाकाशवर्णोऽभवत्। तस्मादेकं युगलं बहिर्निरगच्छत्। कुमारकः श्यामलवर्णः कन्या च गौरवर्णाऽऽसीत्। कन्या सपद्येव तयोर्महिलयोर्द्वितीयायाश्चरणयोः प्रणिपत्याऽब्रवीद्—'अम्ब, आशीर्वादं त्वदीयं कामये।' सा महिला प्रत्यब्रवीद्—'हन्त, अपि वत्से, त्वम्भवसि ?—त्वं कुतः समागच्छसि वत्से, कीदृशं पुनः कामयसे मदीयमाशीर्वादम् ?' सा कन्या स्वपार्श्ववर्तिनं युवानं संज्ञया निर्दिश्याऽब्रवीद्—'अम्ब, एनमहं स्वजीवनसहचारिणमवृणवम्। त्वमावयोर्भाविजीवननिबन्धनाय साफल्याय मङ्गलमाशीर्वादं ब्रूहि।' तौ दम्पती तस्या महिलायाश्चरणयोरपतताम्। सपद्येव दृश्यं विपर्यवर्तत। इत्थं प्रत्यैयत यत्त्वदीयं स्वकीयं गृहं विद्यते। आवां पुष्परथादवतरावः। सम्मुखं त्वदीया जननी तिष्ठति। आवां तस्याश्चरणयोर्मूर्धानमवनमयावः किञ्चाशीर्वादमिमं शृण्वः—'चिरं जीव्यास्तम् वत्सौ युवाम्। अजर्यं युगयुगान्तं यावद् युवयोः सङ्गतम् भूयाद्' इति।"

"अतीऽऽव मन्येऽतीऽऽव मधुरं स्वप्नमद्राक्षीद् भवान् विकास, अतीऽऽव मधुरम्!" ऊर्मिलाऽब्रवीत्।

नासोदियत्ता तस्याः परितोषस्य। साऽब्रवीद्—"यं स्वप्नं

खल्वहमद्राक्षम्, अपि जानाति भवान् किञ्जातीयकः स भवतीति ?"

"किञ्जातीयकः खलु सः ? ब्रूहि तावत् । शृणुयाम् ।"

"मदीयः स्वप्न एवञ्जातीयकः—प्रातःसमये किलाऽऽवां स्वपुष्परथमारुह्य कुसुमलक्ष्म्या आवसथमगच्छाव । तत्राऽतिमात्रं प्रहृष्टा सा ह्यावां प्रत्युदगच्छत् । तदीयावसथसम्प्राप्तिसमकाल-मेवाऽहमवदम्—'कुसुमलक्ष्मि, आदौ तावदावयोः प्रातराशस्य कुरु संविधानकम् । इतोऽपि नास्ति किञ्चिदपि जठरगतमावयोः ।' साऽब्रवीत्—'किं कारणम् ? अतिमात्रं प्रहृष्टेव दृश्यस ऊर्मिले !' किञ्चेत्थं कथयन्ती सा सस्नेहं मदीये कण्ठे स्वकीयां भुजलतां समर्प्य मां स्वयम्पाकगृहाभ्यन्तरेऽनयत् । सा ह्युपकर्णं-मूलं रात्रिघटितं सर्वमपि वृत्तान्तजातं मामपृच्छत् । प्रातराशस्य निष्पत्तौ दश वा पञ्चदश वा निमेषा गताः । एतेन कालेनाऽहं स्वकीयामवस्थां सविस्तरं व्यवृण्वम् । तदाकर्ण्य सोच्चैर्विहस्या-ऽब्रवीत्—'त्वया तावत्सर्वथाऽद्भुतमेव समाचरितमस्ति । एकस्यामेव रात्रौ त्वमत्यन्ताय मत्तः समाच्छिन्नवत्यसि विकासमहाभागम् । भवतु । न भयम् । त्वं मदीया प्रियसखी वर्तसे । नाहं त्वां कस्मिन्नपि सामाजिकविपत्तिमहागर्त्तोदरे पतन्तीमपि नैव निवारयामि ।'

"निष्पन्ने प्रातराशे वयं त्रयोऽप्येकस्य लघुस्तम्भफलकस्य समीपे समागत्याऽऽस्महि । अवसिते प्रातराशग्रहणे कुसुमलक्ष्मी-र्भवन्तमुद्दिश्याऽब्रवीद्—'विकासमहाभाग, अपि भवान् विक्रम-कार्यमेकं समाचरिष्यति ?'

'किन्तत् ?' भवानपृच्छत् ।

'अद्भुतमिव प्रत्येष्यति भवान्। परमिदानीमन्तरेण तन्नास्त्युपायान्तरम्। भवता खल्विदानीं मम सखीयमूर्मिला स्वजीवितसहचरीभावेनाऽङ्गीकर्तव्या। ब्रवीतु। अभ्युपगमिष्यति भवानिदम् ?' कुसुमलक्ष्मीः प्राब्रवीत्।

'किमेतादृशं कारणमुपस्थितम् ?' भवानपृच्छत्।

'कारणं किमुपदिशेयम् ? ऊर्मिला यदपि मां व्यजिज्ञपत्, किञ्च यं स्वकीयं दशापरिणाममवर्णयत्, तेन प्रतीयते यदेकस्यामेव रात्रौ सा भवन्तमत्यन्ताय मत्तः समाच्छिनदिति। तस्याः सामाजिकी विपत्तिर्मामकीनां भावनात्मिकां विपत्तिमप्यतिशेते। नितान्तमपेक्ष्यते तया भवदीयं पराक्रमपूर्णमभिरक्षणं खल्विदानीम्। बेङ्गलूरनगराद् बहिः—शक्यसम्भवं चेदतिदूरं क्वाप्यन्यत्र नेतव्या भविष्यति जातु सा।' कुसुमलक्ष्मीरब्रवीत्।

"तदा भवान् मामपृच्छद्—'अपि भूतार्थं ब्रूते त्वदीया सखी ?'

"तदाकर्ण्य विहस्याऽहं प्रत्यवदम्—'यदप्याशङ्कते कुसुमलक्ष्मीस्तद् भूतार्थं भवेच्चेदहोभाग्यमेव मदीयमहं मंस्ये।'

"तदा भवान् कुसुमलक्ष्मीमुद्दिश्याऽब्रवीत्—'कुसुमलक्ष्मि, स्वसख्याः प्रियमाचरितुं त्वदीयं हृदयमेतावदस्ति सानुक्रोशमित्याकलय्य सर्वथा त्वां प्रति श्रद्धयोपेतं भवति मे हृदयम्। मन्य एतादृशमौदार्यगुणोपेतं हृदयं सर्वथा सुदुर्लभम् एतस्मिन् युग इति वक्तव्यम्भवति। कुसुमलक्ष्मि, धन्या खल्वसि त्वम्।'

"तच्छ्रुत्वाऽहं कुसुमलक्ष्मीं प्रत्यवदम्—'ह्यः पर्यन्तं मामेष महाभागः श्रद्धास्पदं वस्त्वमन्यत। दिव्यलोकनिबन्धनं वस्त्व-

मन्यत । किञ्च नाहं जाने, कैः कैर्विशेषणैर्मां व्यभूषयत् । इदानीं सर्वाण्यपि तानि विशेषणपदानि मत्तोऽपाच्छिद्य त्वं स्वात्मानमेव दिव्यलोकनिबन्धनं वस्तु व्यदधाः । अथेदानीं मन्ये विकासमहाभागो मामेतल्लोकनिबन्धनं वस्त्वेव प्रतिभोत्स्यत इति ।'

"तदाकर्ण्य वयं त्रयोऽपि मुक्तकण्ठमहसाम । किञ्चात्रैव भग्नः स मदीयो मधुरः स्वप्नः ।"

एनं स्वप्नमाकर्ण्याऽहमतीव विचारगुरुत्वं प्रत्यपद्ये । अहमाऽऽलोचयम् नास्ति किमभ्युपायः कश्चन येन कुसुमलक्ष्म्या ऊर्मिलायाश्चाप्यस्तित्वमेकात्मतां प्रतिपाद्येतेति । परमस्मिन् दृश्यमाने जीवने समभविष्यच्चेदभ्युपायः कश्चन तादृशस्तर्हि शतशोऽथ सहस्रशो यानि प्रणयनिबन्धनान्युपाख्यानपुस्तकानि दरीदृश्यन्ते खल्विदानीं, तेषां नामाऽपि नैवोपालप्स्यत । यावत्कालं सर्वथा ह्यपूर्णं पार्थिवजीवनमङ्गीकृत्य तिष्ठामो वयं, तावत्कालन्तु नैवैतच्छक्यसम्भवम् । किञ्चाऽपार्थिवमिति यन्निगद्यते जीवनं, तत्त्वनुमानप्रमाणविषयतामेवोपयाति, न पुनः प्रत्यक्षप्रमाणविषयताम् ।

तत्किं सत्यमेवोर्मिला ह्येकस्यामेव रात्रावत्यन्ताय मां कुसुमलक्ष्म्याः समाच्छिनत् ?

मम मस्तिष्कयन्त्रं सर्वथा निष्क्रियं समपद्यत । प्रत्यायम् मदीयं मस्तिष्काख्यं वस्त्वेव न भवतीति ।

× ×

पुष्परथमारुह्याऽऽदौ कुसुमलक्ष्म्या गृहं प्रत्येव गन्तव्यमिति निरधारयाव । परं परस्तादूर्मिला यशवन्तपुरं प्रत्येवाऽऽदौ गमनं

समीचीनतरं भवेदित्यवोचत् । किमभिप्रेतमेतेनाऽऽसीत्तस्या इति नाहमजानाम् ।

ऊर्मिलाया गृहे विचित्रैव काप्यासीत्परिस्थितिः । पितरौ तदीयौ भृशमेव क्रुद्धावास्ताम् । ह्यस्तनं रात्रिगतं सर्वमपि काण्डमूर्मिलायाः स्वमस्तिष्कोपज्ञमेवासीत् । सा स्वपित्रोरन्यत्र गमनादिविषये यदप्यवादीत्, तत्सर्वमासीत्सर्वथा कपोलकल्पितमेव ।

ऊर्मिला ससाध्वसा सञ्जाता । सा मां गृहबहिर्द्वार एव पुष्परथादवतर्तुमुपादिशत् । किञ्च सा स्वयमेकाकिनी गृहाभ्यन्तरे प्राविशत् । किञ्चित्कालानन्तरं तेषां भृत्यस्तया लिखितमेकं समावृतं लेखमादाय मामुपागच्छत् । अहं तं लेखमवालोकयम् । ममैव मातृभाषायां लिखित आसीत्स लेखः । तस्य संस्कृतरूपान्तरमेवञ्जातीयकम्भवेत् :—

'प्रिय विकास, महत्यामापदि निपतिताऽस्मि । स्वकीयशारीरिकवासनापूर्त्यर्थं भवन्मनःसमाराधनायैव ह्यो रात्रौ तादृशं यदपि मया समाचरितं, तत्सर्वं पित्रोरनुज्ञया विनैवेति स्पष्टमिदानीमभ्युपगन्तव्यम्भवति । नूनमतिमात्रं रुष्टौ मम पितरौ स्त इति विज्ञातं मयाऽत्र । तावुभावपि मामन्वेष्टुं बहिर्गतौ विद्येते । दिष्ट्या नेतोऽपि तौ विजानीतः केन जनेन सह मया ह्यस्तनी रात्रिर्व्यत्यापितेति । द्रुतमेव ताभ्यामत्र प्रत्यागन्तव्यम् । नाहं जाने किमेतदग्रे सम्भवि ? तस्मादात्मसंरक्षणार्थं भवानिदानीमेवास्मात्स्थलात्, सति सम्भवे बेंगलूरनगराच्चापि निर्गच्छेच्चेत् साधुतरं स्यात् । नोचेद् भवानपि निष्कारणं विपदि सम्पतेत् । साञ्जलिबन्धं प्रार्थये कुसुमलक्ष्मीं प्रति

ह्यस्तनरात्रिगतं वृत्तान्तजातं नैवाऽऽविष्करणीयमिति। भवतु। भवदीयाऽऽवासप्रवृत्तिः कुसुमलक्ष्म्यै प्रदातव्या। कृपया, नैव पत्रादिकं किमपि मामुद्दिश्य प्रेषणीयम्। अन्यथा, ह्यावामुभावपीतोऽपि भीषणतरायां विपदि निपतिष्यावः। आशासे बेंगलूरनगरपरित्यागकारणं नैव कस्मिन्नपि जने प्रकटीकरिष्यति भवानिति।

सस्नेहं भवदीयैव,
ऊर्मिला साने।

परस्ताच्चापि—संलग्न आवरके प्रत्येकं रूप्यकशतमूल्याः पञ्च कार्गलमुद्राः प्रेष्यन्ते। नैतदपि रहस्यजातं क्वापि प्रकाशनीयम्।'

अवसिते लेखवाचने स भृत्यो मम कर्णमूलमागत्याऽब्रवीद्—"ह्यो रात्रौ भवन्तं भवद्गृहं सम्प्रापय्य प्रतिनिवृत्तोर्मिलाऽस्मत्स्वामिनं स्वपितरं भवतो विषये सर्वं सूचयितव्यजातं सूचयित्वा किञ्चित्कालं गृहे स्थित्वा चापि गृहान्निर्गतेत्यस्मात् कारणाद् अस्माकं गृहस्वामी नैव भवद्विषये किमपि संशेते। अतोऽहं ब्रवीमि नेदानीमत्र चिरं तिष्ठतु भवान्। इदानीं भवन्तमत्र पुष्परथादवतीर्णं विजानीयाच्चेत्स नूनं स्वतीक्ष्णदशनाग्रकोटिनिष्पेषं निष्पिष्य भक्षयेद् भवन्तम्। त्वचं खल्वपि भवदीयामुच्छिन्द्यात्। किञ्च भवन्तं पुलिशाधिकारिणां हस्ते प्रदद्यात्। तस्माद् निभृतमेवाऽस्मात् स्थानाद् अपयातु भवान्। नेदं गृहं भूयोप्यायातु। अन्यथा तत्करपञ्जरान्तरलग्ने भवति कल्पनातीतां दुरवस्थां स भवन्तं प्रापयिष्यतीति नात्र सन्देहः कर्तव्यः। एवञ्जातीयकेषु व्यतिकरेष्वस्माकं स्वामी नितरां हिंस्रस्वभावो वर्तते।"

अहं स्तब्धजिह्वः समभवम् । कियत्कालानन्तरमवोचम्—"त्वया यदिदं विज्ञापितं, तदर्थमतीव कृतज्ञोऽस्म्यहं तव। यतिष्ये न कश्चनापि सम्भवेदनर्थपात इति ।"

एतदुक्त्वाऽहं तस्मात् स्थानात् प्रचलितः। नगरयान-प्रस्थानकं प्रति यातव्यमासीत्। नासन् परिचिता यशवन्तपुरवर्तिनो मार्गप्रतोल्यादयः। कियद्दूरमेवमेवेतस्ततः सर्पाकारैरन्तर्मार्गैः प्रव्रजन् सुदूरं क्वापि निर्गन्तुं प्रायते। अनुपलब्धे कस्मिन्नपि नगरयानमार्गाभिमुखगामिनि वर्त्मन्यहं सर्वथा परवान् समजाये। आतङ्कभक्षितमिवासीन्मनः। तादवस्थ्ये कमप्यध्वचारिणं जनं नगरयानप्रस्थानकस्य विषये किञ्चित्प्रष्टुमपि नैवोत्सहते स्म मे मनोधैर्यम्—न जाने, को मामूर्मिलया सह वर्तमानं दृष्टवान् भवेत् किञ्चेदानीं मामितस्ततो व्रजन्तमकस्मादेव परिचिनुयात् तस्याः पितरं च सूचयेदित्यनया भिया। तस्मात्तथैव कान्दिशीकः प्राचलम्। किञ्च पर्याप्तं दूरं यावत् प्रचलन्नेवाऽऽसि। क्व गच्छामीति नाहमजानाम्। तथा'प्यविज्ञाते जलाशये' इव तन्नगरान्तरङ्गे प्रविश्य कस्मिन्नपि विषमे सङ्कटमहापङ्के निमग्नः समजाये।

कतिचिदेव पदानि गतो भवेयमहं, यदा भूयोऽपि कामपि सत्कुलोद्भवां सुगृहीताक्षरां महिलां—दुरदृष्टवशाद्वा स्वदृष्टवशाद्वेति नैव वक्तुं पारयामि—अद्राक्षम्। सा तादृशीं वेशभूषां विधाय व्रजति स्म, येन साऽपि कुत्रापि जिगमिषतीति स्पष्टं विभाव्यते स्म। अहं तामनु मन्य उपचत्वारिंशद्भिः पदैर्विप्रकृष्टः सन्नसरम्। तामनुशीलनस्य प्रयोजनं नासीदन्यत्किमपि। एताभ्यश्चक्रव्यूहाकाराभ्यः प्रतोलीभ्यः कथन्तु नाम

बर्हिर्निःस्रियेतेतीदमेकमेवाऽऽसीत् प्रयोजनम् । तथाविधं व्रजतोरावयोरेकस्मिन् स्थाने तथा किञ्चित्समभवद् यथा सङ्कीर्णायां प्रतोल्यां खल्वेकस्यामावां विहाय सुदूरं यावन्नहि कश्चनाऽप्यन्योऽदृश्यत । किञ्च सा महिला स्वमुखं व्यावर्त्य पृष्ठतो मां प्रत्यपश्यद् अतिष्ठच्चापि तत्रैव । अहं यत्राऽऽसम्, तत्रैव स्तब्धसर्वेन्द्रियः समतिष्ठे । अहं तां महिलां बलादनुसरामीति सा मनसि सन्दिग्धे किमिति शङ्काभिभूतं मे चित्तं समजायत । परं मदीयं तथाविधं स्तम्भनमेवाऽधिकं सन्देहजनकमभवत् । नाहं चेत्स्वगमनमवारोत्स्ये नहि कश्चनाऽपि तर्हि किमपि समदिक्ष्यत । अध्वानन्तु सर्व एव गच्छन्ति । तत्प्रयोजनः खल्वेव सोऽध्वा । नहि कश्चनाऽपि कमप्यध्वचारिणमध्वनि स्थितं सहसा सन्दिग्धे । परं सहसा स्वगमनावरोधो नूनं जनयत्येव तावत् तथाविधं सन्देहम् । एवंविधे विचारे मम मस्तिष्कपथं स्पृष्टवत्येवाऽहमतिवेलमुदविजम् । चेलक्नोपं क्षरता स्वेदाम्भसा च समभ्युक्षितसर्वगात्र इवाऽभवम् ।

भवतु । अहमग्रे प्रासर्पम् । प्रतोल्यां दंशनशीलो विक्षिप्तो भषकः क्वापि निःशब्दं स्थितो भवेत्, स्वकीयोऽध्वा चापि तं स्थानं स्पृशन्नेव गच्छेत्, तदानीं ततः पुरः सर्पतो जनस्य यापि मनोदशा भवितुमर्हति, सैव मनोदशा ममाप्यभवत् किञ्च तस्यामेव मनोदशायामहम् पुरतः प्रासर्पम् ।

सा महिला तत्र निश्चला समतिष्ठत । मदीयं गतिस्तम्भनं सप्रयोजनमासीत् । तस्य व्याख्याऽऽसीच्छक्यसम्भवा । परमध्वानं गच्छन्त्याऽकस्मादेवाऽस्थान एव च यत्तया गतिस्तम्भनमालम्बितं, तदव्याख्येयमेवासीद् इति वक्तव्यं भवति । को वेद, ह्यहमेवोर्मिला-

सहचारीति सा मां परिचिनोति जातु । तस्मादेवाऽकस्मात्सा तथाकारमस्तम्भत मां धर्तुमिति । अहं स्वकीयां दृष्टिमवनमय्य तां प्रत्यनवलोकयन्नेव तस्याः पुरतो निःशब्दः सन्निरगच्छम् । कियानिवाऽहमबिभयम् तदानीमिति नैवाऽन्यतरः कश्चनाऽपि शक्नोत्यनुमातुम् ।

अनतिदूरमध्वानं गत्वा प्रतोल्याः कुटिलं वर्त्म समुल्लङ्घ्य सुविस्तीर्णं खल्वेकं राजमार्गमपश्यम् । अस्मिन् राजमार्गे पुष्परथाः, तुरङ्गयानानि, प्रेलशकटाः[1], वस्तुवाहनानि[2] च सवेगं धावन्ति स्म । जना इतश्चेतश्च गतागतं कुर्वन्ति स्म । तत्राऽऽगत्य नाम समुच्छ्वसितमिव किञ्चिन्मदीयेन चेतसा ।

एकं जनमहं मल्लेश्वरगामिनगरयानप्रस्थानकप्रवृत्तिम् अपृच्छम् । स च सौभद्रप्रदर्शनपुरस्सरमांग्लभाषया मां मदीयमभिमतं स्थानं निरदिशत् । मनस्येव तस्मै धन्यवादान् वितीर्याऽहं नगरयानप्रस्थानकं प्रत्यचलम् । कियद्दूरं गत्वा प्रयोजनशून्यमेव पृष्ठतः स्वमुखं व्यावर्त्याऽपश्यम् । सैव महिला । भूयोऽप्यबिभयमहम् । चरणगतिं च स्वकीयां किञ्चित् क्षिप्रतरां व्यदधाम् ।

परं सम्प्राप्ते नगरयानप्रस्थानके तु चरणगतिः कथं वा क्व वा शक्यते स्म क्षिप्रतरा कर्तुम् ? तस्मात् किमपि पश्चात्कायेन भूयसा पूर्वकायं प्रविश्येव तत्राऽतिष्ठम् । नोदसहे द्रष्टुं पृष्ठतो मुखं व्यावर्त्य ।

---

१. प्रेलशकटः='ठेला' इति भाषायाम् ।

२. वस्तुवाहनम्='ट्रक' इति ख्यातं वाहनम् ।

दिष्ट्या निमेषद्वयेनैव मल्लेश्वरगामि नगरयानं तत्र सम्प्राप्तम् । सम्मर्दस्तावद् आरोढुमनसां यात्रिणामासीदेव किञ्चिन्मात्रायाम् । केचन यात्रिणोऽवातरन् । तेष्ववतीर्णेषु यानप्रबन्धकोऽस्मान् प्रविशतोऽभ्यजानात् । अहं नगरयानाभ्यन्तरे प्राविशम् । इतोऽपि नाहं मुखं पृष्ठतो व्यावर्त्याऽपश्यम् । परम् उपवेशनोचितं स्थानं प्रेक्षितुमितस्ततः परिभ्रामितयोः स्वचक्षुषोः सर्वथा मामनुपदमेव विद्यमानां तामपि महिलामपश्यम् । शोष-मुपयातमिव कृत्स्नेनापि रुधिरप्रवाहेण मम गात्राभिसारिणा । अहं वीतजीवकल इव कथञ्चिदग्रतः प्रासर्पम् । नगरयानचाल-कस्य पृष्ठभाग उपवेशनोचितं रिक्तमासीदेकं स्थानम् । तत्र गत्वोपाविशम् । मम पार्श्वेऽन्यदप्येकमासीद्रिक्तं स्थानम् । दुरदृष्टमेव मदीयं मन्ये यदन्ये यानयात्रिणः सर्वं इतरत्र वर्तमाने-ष्वेव रिक्तस्थानेषूपाविशन् । नहि कोऽप्युपाविशद् मम पार्श्व-वर्तिनि रिक्तस्थाने । मनस्येवाऽहं परमेश्वरमयाचे कश्चनाप्यन्य-तरो जनो मम पार्श्वे विद्यमानं रिक्तस्थानमशून्यं कुर्याद्, येन सा महिला तत्रागत्य नैव शक्नुयादुपवेष्टुमिति । परं परमेश्वरोऽपि कृतप्रतिज्ञ इवासीत् तदानीं मदीयां याच्ञां मोघां कर्तुम् । 'भवति च भाव्यं विनापि यत्नेने'ति यद् वदन्ति, तदेव चरि-तार्थमभूत् । अनागते मत्पार्श्ववर्तिरिक्तस्थानमशून्यं कर्तुं कस्मिँश्चिदप्यन्यतरस्मिन् जने तत्तथैव रिक्तमतिष्ठत् किञ्च 'पारिशेष्यन्यायम्' अनुसृत्य सा महिला तत्रागत्योपाविशत् । शुष्करसक्रासारसश्रीकतामभजत तत्कालमपयातरुधिररसाभि-सरणं मे शरीरमिति वचनं सुवचं स्यात्तदानीम् ।

अभ्यसर्पद् नगरयानम् । अहं यानखडक्किकायाः समीप-

मासमुपविष्टः । एतावता तां महिलां पृष्ठतः कृत्वा खडक्कि-
काया बहिरेवाऽहं द्रष्टुमारभे । परं यात्रापत्रप्रदानार्थं समुपयाते यानप्रबन्धके स्वमुखव्यावर्तनमपरिहार्यमेवाऽभूत् । यानप्रबन्धको-ऽपृच्छत्—"क्व यातुकामो भवान् ?"

"मल्लेश्वरम् ।" अहं प्रत्यवदम् किञ्च तद्धस्ताद् यात्रा-पत्रमाददे ।

"अत्रभवति, क्व यातुकामा ?" यानप्रबन्धकस्तां भद्रमहि-लामपृच्छत् ।

"मल्लेश्वरम् ।" सा महिला व्याजहार ।

अहं मनस्येवाऽभ्यदधे—'Goodness gracious !' इति ।

## त्रयोदशः समुच्छ्वासः ।

प्रयाते यानप्रबन्धके सपद्येव सा महिला मामपृच्छद्—"अत्रभवानपि किं मल्लेश्वरं प्रति यातुकामः ?"

"ओम् अत्रभवति !"

"किं बेङ्गलूरनगरवास्तव्य एवाऽत्रभवान् ?"

"नैव खल्वत्रभवति !"

"बहिष्टात्तर्ह्यागतोऽत्रभवान् ?"

"ओम् अत्रभवति ।"

"कृपया क्षम्यताम् । भवन्तं विलोक्य किमपि प्रष्टव्यमिति करोति मे चेतः । अप्यर्हामि किमपि प्रष्टुम् ?"

एतदाकर्ण्य सकृत् समुत्कम्पितमिव मया। परं द्रागेवात्मानं प्रकृतिमापाद्याऽहमवदम्—"श्रोम् अत्रभवति। यथेष्टं, यथाकामं च पृच्छतु।"

अहमालोचयम् सा प्रक्ष्यति—'कस्माद् भवाँस्तथाकारं मामन्वपतद्, मुखं व्यावर्त्य दृष्टवत्यां मयि कस्माद् भवान् सहसा तथाकारमस्तम्भत किञ्च चेलक्नोपं क्षरद्भिः स्थूलस्वेदोद-बिन्दुभिः पर्याविलमुखमण्डलः समवर्तत' इति। परं सा यद-पृच्छत् तत्सर्वथा भिन्नमासीद् वस्तु। साऽपृच्छत्—"कस्माद् भवान् खद्दरवस्त्राणि परिदधाति ? शिल्पकौशलस्य संवर्धन-मेतद्द्वारेण भविष्यतीति बुध्यते किं भवान् ?"

प्रश्नं खल्वेतमाकर्ण्य सर्वप्रथममहं तद्भयमुपजीव्य व्यहसम्, यद्धि तां भद्रमहिलां विलोक्य विनैव कारणं मदीये मनसि समुत्पन्नमासीत्। नूनं 'बालः पायसदग्धो दध्यपि फूत्कृत्य भक्षयती'ति यदुच्यते, तदेवाऽत्रापि प्रसङ्गे चरितार्थमासीत्। भवतु। द्रागेव मदीयं मनः प्रकृतिस्थं, सुप्रसन्नं च समजायत खल्वपयातप्रचण्डजलधरपटलमिन्द्रनीलमयमाकाशमिव। अहं तस्यामेव प्रसन्नमनोदशायां तामपृच्छम्—"कस्मात्प्रष्टव्यो भवत्येष प्रश्नः ?"

"श्रोम् श्रीमन्, बहुभ्यो दिवसेभ्यो मदीये मनसि खद्दर-निबन्धना बहवो विचाराः प्रादुर्भवन्ति। मया सह कार्यनिलयेषु कार्यं कुर्वाणाः काश्चिद् भगिन्यः खद्दरं परिदधति। तद्योगेन तासामाविर्भावे सर्वथा विशिष्टमिव किमप्याकर्षणमनुभूयते। इच्छामि खद्दरं परिधाय तादृशमेवाऽऽकर्षणं स्वकीयेऽपि जीविते समुद्भावयेयमिति। परं भूयोऽपि समालोचयामि—मानवेन

वस्त्रनिर्माणवस्तुनि यदिदं किमप्यपूर्वं शिल्पकौशलं सम्पादितं, किं सर्वमप्यर्थविरहितमेव तद् इति ।"

"अहमनीशोऽस्मि भवत्कृतप्रश्नप्रतिवचनस्य ।" अहमवोचम् ।

"कुत एतत् ? किं नैव कापि विचारणाऽस्मिन् विषये भवता कदापि कृता ?"

"नैव तादृशः कदाप्युपस्थितः प्रसङ्गः । खद्दरपरिधानं मदीयः स्वभावधर्मः—ननु वक्तव्यं शरीरधर्म एव संवृत्तोऽस्ति । परं कस्तत्र विशेषः, अपि तच्छिल्पकौशलसंवर्धको भवति न वेति, तद्योगेन परिधातुः सौन्दर्यमभिवर्धते न वेति इत्येवमादीन् विषयान् प्रति नैव कदापि समजायत मे विचारप्रवृत्तिः ।"

"इदानीमुपस्थितस्तादृशः प्रसङ्ग इति समवधार्य प्रारभतां भवानिदानीमेतद्विषयकमूहापोहम् । कञ्चनाऽपि मूल्यवन्तं निष्कर्षं खल्वासादयिष्यत्येव भवानिति मे मतिर्भवति ।"

"कः पुनर्भवत्याः स्वकीयो निष्कर्षः ? अपि कदाचिदेतस्मिन् विषये भवत्याऽपि कृता कापि पर्यालोचना ?"

"यदा खल्वहं केनाप्येकतरेण दृष्टिविशेषेण पश्यामि, तदा सर्वथा शिल्पकौशलविहीनान्येतानि खद्दरवस्त्राणीति जायते मदीया धारणा । शिल्पकौशललेशोऽपि नैव गोचरतां याति । तथात्वेऽपि किमस्ति तादृशं किमप्येवंविधेषु शिल्पकौशलविरहितेष्वपि खद्दरवस्त्रेषु, येन हि तद्वस्त्रपरिधातुस्तावान् भवति मनोमोहक आविर्भावगतश्चित्ताकर्षणगुणोच्छ्रायः ? किमस्ति तादृशं किमप्येतेषु खद्दरवस्त्रेषु, येन हि यः कश्चनाऽप्येतानि वस्त्राणि परिदधाति, तं प्रति बलादेव सम्प्रज्वलिता भवति पूज्यबुद्धिः ?"

अहमकथयम्—"मदीयं स्वकीयं मनस्तावदितोऽप्येतस्मिन् विषये निर्णयमेव धावति—खद्दरवस्त्राणां शिल्पकौशलप्रकर्षेण सह कश्चिदस्ति दूरगतोऽप्यभिसम्बन्ध इति। तथाप्यभ्युपगच्छामि खद्दरवस्त्रपरिधातृषु विद्यमानः कोऽपि गुणोच्छ्रायो मदीयं मनः सर्वथा स्वायत्तीकरोतीति। ते खल्वात्मीयतराः किञ्च समानधर्माणः प्रतीयन्ते। अहं स्वयं खद्दरं परिदधामीत्यपि जातु भवितुमर्हति कारणमेतादृशस्य सम्प्रत्ययस्य।"

"नास्त्यन्यतरत्किमप्येतद्व्यतिरिच्य ?"

"आलोचयाम्यन्यतरदपि नूनं भविष्यति कारणजातं किञ्चिदिति। प्रत्येमि खलु, खद्दरवस्त्रस्य वैशिष्ट्यं तद्वस्त्रनिर्वरीतुर्जनस्याऽभिरुचिगता या काप्युदात्तस्वरूपा संस्कारिता दरीदृश्यते, तयैव समुत्पादितं स्यादिति। स्वस्थो देहः, स्वस्थं मनो, ह्यनवच्छिन्नो मनःप्रसाद, आडम्बरपराङ्मुखी प्रवृत्तिः, समुन्नता चापि वैचारिकी भूमिका इत्येवमादिकानां गुणानां द्योतकत्वादेव खद्दरवस्त्रं स्वकीयं मूल्यं कलयति। शिल्पकौशलगतं सम्मोहनं मानवीयान्तःकरणवर्तिनीनां सुसंस्कृताभिरुचीनां प्रकटीकरणसामर्थ्यादेव तावद् विज्ञायते ? शिल्पकौशलवतां वस्त्राणां निर्माणकृदपि शिल्पकौशलसाधकः किञ्च तेषां वस्त्राणाम् आत्मोपयोगाय निर्वरणकृदपि शिल्पकौशलसाधक इति मदीयं मतं भवति। अथवा शिल्पकौशलवतां वस्त्राणां निर्वरणकृतो जनस्य शिल्पकौशलसाधना ह्यधिकतरं मूल्यं कलयति। वस्त्राणां निर्वरणं तथा विधातव्यं यथा जनस्य प्रकृतं रामणीयकं तद्योगेनाऽधिकं गुणोत्कर्षं प्रकटीकुर्यात्। व्यक्तिभेद-वर्णभेद-गात्ररचनाभेदाद्यनुगुणमिदं निर्वरणमपि विभिन्नप्रकारकं स्यात्।

यथायथमविचार्य खल्वेतत्सर्वम् अन्धानुकरणपूर्वकं वा, विवेक-विरहपूर्वकं वा वस्त्राणि निर्म्रियेरंश्चेद् अत्यन्तं शिल्पकौशल-वन्त्यपि वस्त्राणि निःसंशयं स्वकीयं वैशिष्टचं परिहास्यन्ति। तेन हि न जनस्याकर्षणं, किन्तर्हि ह्यनाकर्षणमेवोपचेष्यते। यथा खल्वन्ये क्रियाकलापा मानवीयान्तःकरणदर्पणभावमुप-यान्ति, तथैव वस्त्राण्यप्युपयान्ति। यद्धि वस्त्रं यावता लघुनोपायेन मानवस्याऽन्तःकरणगतामुदात्ततां स्फुटयिष्यति, तावदेवाधिकं तच्छिल्पकौशलजनितं गुणोत्कर्षं परिपोषयिष्यति। अहं तावत्प्रत्येमि खद्दरवस्त्रे विराजते खल्विदं गुणोत्कर्षपरिपोषणा-त्मकं सामर्थ्यमिति। येऽपि जनाः खद्दरवस्त्रं परिदधति, तेषामभ्यन्तरगतः सौम्यः स्वभावः, तेषां व्यक्तित्वगतमाकर्षणं किञ्च तेषां निराभरणं रामणीयकं समुन्नततरेण रूपेण लोक-नेत्रयोः पुरस्तादुपतिष्ठते। एतेनैव कारणेन खद्दरवस्त्रं तत्परि-धातुरभ्यन्तरे कमप्यद्भुतं सम्मोहनमुत्पादयति जातु। महाकवि-कालिदासप्रोक्तमिदं वाक्यमस्मिन् प्रस्तावे स्मृतिपथमुपानीय-ताम्—'इयमधिकमनोज्ञा वल्कलेनाऽपि तन्वी'ति। परिहित-वल्कलवस्त्राऽपि कस्मादधिकमनोज्ञरूपाकृतिः प्रत्यभाच्छ-कुन्तला? यतो हि तानि वस्त्राणि शकुन्तलागतं शारीरिकं मानसिकं चेत्युभयविधं रामणीयकमधिकतरेण सामर्थ्येना-ऽशक्नुवन् स्फुटयितुमिति।"

सपद्येव साऽभाषत—"कथन्तर्हि भवान् श्लोकपंक्तिमिमां व्याख्यास्यति—'सरसिजमनुविद्धं शैवलेनाऽपि रम्यमिति?"

"हन्त भोः, निगृहीतवत्यसि मां 'निग्रहस्थानपतितम्'। तथापि कालिदासः स्वयमेवेमां व्याख्यातवानस्ति—'किमिव हि

मधुराणां मण्डनं नाकृतीनामि'त्यभिधाय । किन्त्वाभ्युपगच्छा-म्यांशिकमेव वस्त्राणां शरीररामणीयकाभिवृद्धावंशदानं, न पुनः सर्वांशिकमिति । मूलभूतं वस्तु तावज्जनस्य प्रकृतो मनोज्ञभावः किञ्च प्रकृतं माधुर्यमेवास्ति । तद्विरहे सर्वाण्यपीमानि बाह्य-शृङ्गारसाधनानि निःसत्त्वानि सञ्जायन्ते । भवदीया याः खलु सहयोगिन्यः खद्दरवस्त्रपरिधात्र्यो भगिन्यः स्वव्यक्तित्वोत्कर्षेण विशेषमाकर्षणगुणं पुष्णन्ति, तास्वपि मूलभावेन खल्विम एव सर्वे गुणा निवसन्तीति विज्ञेयम् ।"

"कृत्स्नमप्येतद् भवत्कृतस्पष्टीकरणमुपलक्ष्यीकृत्य विलसन्तु बहवो मे धन्यवादाः ।"

किञ्चित्कालं तूष्णीं स्थिता सा भूयोऽप्यगदत्—"भवतु । किमुपदिशति भवान्? किमहमपि खद्दरवस्त्रपरिधानं प्रतिपद्येय ?"

"इदं सर्वं भवदीयामिच्छां विषयीकरोति । अहमेतस्मिन् विषये किमर्हाम्युपदेष्टुम् ?"

"मम प्रश्नस्येदं हृदयं—भवन्मते खद्दरवस्त्राणि मम शरीरे शोभिष्यन्ते न वेति किञ्च तेनाहमधिकतरमाकर्षणगुणं प्रति-पत्स्ये न वेति ?"

"कदाचिदपि परिधाय तानि वस्त्राणि समागच्छतु भवती । तदैव भवतीं विलोक्य युज्येत किमपि वक्तुम् ।"

एतदुत्तरकालं सकलोऽपि वार्तालापः खल्वन्यामेव दिश-मुद्दिश्य प्रावहत् । साऽपृच्छद्—"भवान् मन्त्रयते खद्दरवस्त्राणि परिधाय समागच्छेयमहमिति ? परं क्व समागच्छेयम् ? नाहं भवदावसथप्रवृत्तिं विजानामि । अहं खद्दरवस्त्राणि परिधाय कथं भवतः पुरस्तात्समागन्तुं शक्ष्यामि ?"

वार्तालापस्याऽयं विषयः सर्वथा ह्यप्रत्याशित एवासीत्। अहं किञ्चिदात्मानं स्तब्धमिवाकलय्य समतिष्ठे। न किमपि प्रतिवचनं मन्मुखाद्विनिरसरत्।

परं नासीत्सा जातु स्वकीयं पराजयं स्वीकरिष्यमाणा। अचिरादेव सा मामपृच्छद्—"भवतु। इदं तावदुपदिशतु भवान्—अस्यां नवयौवनोदयवेलायां, यदा खलु सर्वोऽपि लोको नानाविधानि यन्त्रसाधितानि वस्त्राणि परिधाय स्वशरीरमलङ्कुर्वाणो नैव श्रद्धाप्रतीघातमनुभवति, तदा कुतः समुपजातेयं भावत्की खद्दरवस्त्रपरिधानबुद्धिः? केन प्रेरितो भवान् खल्वेतस्मिन् व्यापारे?"

"मम मनोदेवतया।" अहमप्यल्पग्रन्थं प्रत्यवोचम्।

"'मनोदेवतया?' का पुनरियं मनोदेवता नाम? तर्कयामि खद्दरवस्त्रपरिधानशीला कापि भवदीया प्रेयसी भवेदियमिति।"

नाहमेतच्छ्रुत्वा किमपि प्रत्यवदम्। व्यहसमेव केवलम्।

"किं कारणं मदीयं प्रश्नं हसित्वैव व्यपस्तृणाति भवान्? तर्कयामि 'प्रेयसी'शब्दसंशब्दनेन विचलितमिवात्मानं कलयति भवानिति।"

"कथम्पुन'र्मनोदेवते'त्यस्य शब्दस्य 'प्रेयसी'ति समजनि पदार्थः?" अहमपृच्छम्।

"कस्तत्र क्लेशः? 'मनसि या देवता, मनसो वा, मनसा वाऽवधारिता या देवता, सा मनोदेवते'त्येतया व्युत्पत्त्या नैव सम्भवति किम् 'मनोदेवता'शब्दस्य 'प्रेयसी'ति पदार्थः?"

तस्या एवंविधं चमत्कारिकं संस्कृतज्ञानं विज्ञाय चकितचकितः समभूवम्। अथ किमत्र मया मन्त्रयितव्यम्? अहमवदम्

—"ओम् भवति, युक्तमेव वक्त्यत्रभवती। तथापि मनश्च मनोदेवता चेत्यनर्थान्तरम्। यन्मनस्तदेव देवतारूपत्वान्मनो-देवतेत्यासीन्मदीयाशयः। किञ्च स्वकीयेन मनसैव प्रेरितः सन्नहं खद्दरं परिदधामि, नान्येन केनापि प्रेरितः सन्नित्ये-तावदेवासीन्मदीयं विवक्षितम्।"

"अयमत्र मदीयस्य वक्तव्यस्य सारसंग्रहः। परिहितखद्दर-वस्त्रं भवन्तमालोक्याऽहमपि तत्परिधानाय प्रेरिता भवामि। तस्मादेव मयालोचितम् भवानप्येवंविधः कामपि स्वकीयां प्रेयसीं विलोक्यैव खद्दरपरिधानाय प्रेरितोऽभवज्जात्विति।"

विहस्याहमवोचम्—"मदीया तावन्नास्ति काचिदपि प्रेयसी खद्दरपरिधानशीला।"

सा खल्वपि विहस्याऽब्रवीत्—"किम्पुनरेतेन प्रतिवचनेन ध्वनयितुकामो भवान्?"

"कुत एतत्पृच्छ्यते? अपि क्लिष्टं भवति किम्मदीयं वाक्यम्?"

"नैव श्रीमन्। वाक्यं तावदक्लिष्टमेव। परं नैतेन ध्वन्यते 'प्रेयस्या' अत्यन्ताभावः; किन्तर्हि प्रेयस्याः खद्दरवस्त्रपरिधान-शीलताया अभावो ध्वन्यते। किमहं मृषा ब्रवीमि? भवतु। अहं श्वः प्रभृत्येव खद्दरवस्त्रपरिधानमारभेय तर्हि?"

" 'तर्हीं'त्येतस्य कः पदार्थः?"

"अयमेव यत्तदानीं भवदीयैका प्रेयसी खद्दरवस्त्रधारिणी प्रतिपत्स्यते।"

"साधु! कियच्चारुतरमभिधत्ते भवत्यपि?" अहं सुसंयतं विहस्याऽवोचम्।

"इदं खल्वेतेनोक्तं भवति यन्न भवान् प्रेयसीरूपेण मां द्रष्टुं कामयते। न भयम्। किं भवान् भार्यारूपेण मां द्रष्टुं कामयिष्यते ?"

"अप्येष प्रहासो भवत्या उत मां यथाजातं प्रतिपादयितुं यत्नपरायणाऽत्रभवती ?"

"नैव श्रीमन्। कस्मादहमत्रभवन्तं यथाजातं प्रतिपादयिष्यामि ? कस्या अपि भद्रमहिलायाः साधारणमपि वाक्यं तथाकारं प्रहर्तुम्प्रभवति तत्रभवति ? नेयमसहिष्णुता खद्दरधारिणां गुणोच्छ्रायं व्यनक्ति।"

"अत्रभवती प्रकामं सुबुद्धा, कृतविद्या, कृतविनया च प्रतिभाति। इदमेव किं गृहीतानामक्षराणां फलम्? नैव केनाप्यनतिसंस्तुतेन जनेन सह निष्प्रयोजनं विधातव्यः खल्वेवंविधो वार्तालाप इति किमितोऽप्युपदेष्टव्यं भवति ?"

"परं सर्वत्र सर्वकालं चाप्यपरिचितं जनमपरिचितमेव मत्वा व्यवहारो विधीयेत चेत्कथन्तर्हि तस्याऽपरिचितत्वं कालत्रयेणापि केनापि हातुं शक्यं स्यात् ? परिचिततरोऽपि जनः परिचयात्पूर्वमपरिचित एव भवति। नैव किम् ? तर्ह्येवंविधे व्यतिकरे कथं कस्यापि लोकयात्रा प्रसिध्येत ?"

"तथापि नहि कश्चित्तावदद्भुतमेवंविधेष्वान्तरङ्गिकेषु विषयेषु केनाप्यपरिचितेन जनेन सह चर्चारम्भं विधाय कृती भवति।"

"नहि तर्हि खद्दरवस्त्रधारी कश्चित् सरलया सरण्या वाचं प्रयुङ्क्ष्वेत्युक्ते ह्यावर्तविवर्तबहुलया सरण्या वाचं प्रयोज्य कृती भवति। अहं तावदतीव स्पष्टैः शब्दैरपृच्छम् अहं भवदीया प्रेयसी वा भार्या वा भवितुमर्हामि न वेति।

यद्यहं भवन्मते नैव भवितुमर्हामि तर्हि सुस्पष्टैः शब्दैस्तथाविधं भवता मन्त्रयितव्यम् । कस्तत्र सङ्कोचः ? न खल्वस्ति मया नियन्त्रिता भवदीया जिह्वा क्वापि ।"

"भवतु । किम्पुनर्मयाऽत्रभवत्या मते प्रतिवक्तव्यम् ?"

"प्रतिवक्तव्यं नैवार्हसीति । नैतच्चेच्छक्यते प्रतिवक्तुं श्रीमता तर्हि वक्तव्यं भवितुमर्हसीति ।"

"परं किमस्ति भवत्याः प्रयोजनमेतेन सर्वेण ?"

"ओम् भगवन् । अस्त्येकं बलवत्प्रयोजनम् । भवानस्ति खद्दरधारी । श्रूयते हि खद्दरधारिणः सर्वेऽपि महात्मानो भवन्ति; सत्यप्रतिपालका भवन्ति; तेषामन्तर्बाह्यं सर्वथा शुद्धं तिष्ठतीति । अहमिदं सर्वं परीक्षितुमिच्छामि । अहं ज्ञातुमिच्छामि कियदवधि खद्दरधारिणः खल्विमे सत्यवादितायाः परीक्षायां सत्त्वादनपेतास्तिष्ठन्तीति ।"

"क्षम्यताम् । नास्म्यहं समुद्यतः परीक्षामेनामभ्युपगन्तुम् ।"

"तर्हि खद्दरधारणं भवदीयं खल्विदं सर्वथा च्छलमभ्युपेतं भवेत् ।"

"भवेन्नाम च्छलमभ्युपेतम् । किञ्चातः ?"

"अतिमात्रमल्पीयसः प्रश्नस्य खल्वेकस्य कृते भवान् स्वकीयस्य खद्दरवस्त्रस्य महतीं प्रतिष्ठामेव लघयितुं यत्नवान् वर्तते । कस्मान्न प्रतिवक्ति भवानेतं प्रश्नम् ? यदि भवान् मां कस्मिन्नपि रूपे नैवाङ्गीकर्तुं शक्नोति किञ्चान्तःकरणपूर्वकं मां व्यपोहितुमिच्छति तर्हि स्पष्टमेव वक्तव्यम्—'नाहं भवतीं स्वभार्यां प्रेयसीं वा कर्तुमर्हामी'ति । अथ चेन्नैवं भवान् प्रतिवक्ति तर्हीदमेव तस्य हृदयं भविष्यति यदहं भवतः प्रेयसी भवितुमर्हामि ।

क्वचिद् भार्याऽपि ! 'मौनं स्वीकृतिलक्षणमि'ति न्यायेन । यदपि किञ्चिद् भवेत् तत्सर्वं स्पष्टं भवेत् । सत्यवादिनां नैव शोभा-मावहति वचनसङ्कोचो वा वाक्यार्थनिगूहनप्रयासो वा । सत्यङ्गी-कर्तव्ये वक्तव्यम् 'ओमि'ति । असत्यङ्गीकर्तव्ये वक्तव्यम् 'नही'ति । सुष्पष्टं सुनिर्मलं च सत्यम् ।"

नूनमेतत्कथनं बह्वर्थगर्भितमासीत् । मया नूनं प्रश्नोऽयं तत्कालमेव प्रतिवक्तव्यः । सङ्कोचः किम्प्रयोजनः ?

अहमवदम्—"भद्रे, जगतीगतानां सर्वासामपि तरुणस्त्रीणां प्रेयसीभावेन वा भार्याभावेन वा स्वीकरणं सर्वेषामपि तरुण-पुरुषाणां कृते शक्यमभविष्यच्चेद् 'ओमि'त्येव प्रत्यवक्ष्यमहम् । परं सर्वथा जानात्येव भवती यद्रूपा विश्वस्य वर्तते रचना साम्प्रतं, तत्र नास्त्येतच्छक्यसम्भवमिति । तस्माद् 'नही'त्येवमहं प्रतिवचनं कुर्याम् तर्हि विश्वगतं प्रस्तुतं रचनाक्रमं लक्ष्यीकृत्य मां सर्वथा क्षन्तुमर्हति तत्रभवती ।"

सा ह्युन्मुक्तहासं हसित्वाऽब्रवीत्—"भवतु । अपरं खल्वेकं प्रश्नं पृच्छामि । अभ्युपगम्यते नाहं भवतः प्रेयसी वा भार्या वा भवितुमर्हामीति । परमहं 'परिचिता' तावद् भवदीया भवितु-मर्हाम्येव । नैव किम् ?"

"बाढम् परिचिता तावन्मदीया खल्वत्रभवती सर्वथा शक्नोति भवितुम् ।"

"भूयोऽपि सम्प्रधार्यतां सम्यग्रीत्या । न तत्र खल्वपि विश्वगतः प्रस्तुतो रचनाक्रमः कामपि समुत्पादयेद् बाधामिति ।"

"कीदृशी सा बाधा ?"

"भवान् 'प्रेयस्याम्', 'भार्यायाम्' 'परिचितायां' वा कं

विशेषं पश्यति ? मन्मते तु नास्ति कश्चनाऽपि तात्त्विको विशेषः। 'परिचिता' सती नैव किमहं तादृशं व्यवहारमपेक्षितुमर्हामि भवतो, यादृशं भवान् स्वप्रेयसीं प्रति वा भार्यां प्रति वा करिष्यतीति ?"

"अहं तावदेतेषु त्रिष्वपि शब्दप्रयोगेषु भूयांसं विशेषं पश्यामि।"

"शब्दप्रयोगनिबन्धनः खल्वेव स विशेषो भवितुमर्हति; न पुनर्वस्तुतत्त्वनिबन्धनः। कामपि स्त्रियं विशिष्याद् भवान् प्रेयसीति विशेषणेन, भार्येति विशेषणेन, परिचितेति विशेषणेन वा तस्याः स्त्रियः स्त्रीभावे, स्त्रियः पुरुषस्य च मध्ये विद्यमाने सम्बन्धे किञ्च पुरुषस्य पुरुषभावे नहि किमप्यभूतपूर्वं समुत्पत्स्यते परिवर्तनं कालत्रयेणापि।"

"भवतु। अहं परिचितेत्यस्य स्थाने भगिनीत्येतस्य शब्दस्य प्रयोगं कुर्याम् किन्तर्हि स्यात् ?"

"शब्दप्रयोग एव स्यात्। नान्यत्किञ्चित्। किञ्चाऽहमादावेव न्यवेदयम् नहि शब्दप्रयोगशतेनापि परिवर्तितुं शक्यं वस्तुतत्त्वमिति।"

तस्यास्तर्कस्य पुरस्तान्न वेद्मि कस्मात्सर्वथा कुण्ठितत्वं भजते स्म मदीयस्तर्कः। अहं वार्तालापस्येमां परम्परामत्रैव पर्युपयुक्तां कर्तुमैच्छम्। अहमवोचम्—"अहं परास्तमिवात्मानमनुभवामि।"

"अपरिहार्यस्तद्रूपोऽनुभवो भवतः। यदा नास्ति कश्चिदपि स्थिरांशो भवदीये तर्के कस्मात्तर्हि वृथा तदवलम्बनं विधत्ते भवान् ?" सा सस्मितमब्रवीत्।

अहं मौनमवालम्बे । इदानीं यावत् कृत्स्नोऽपि प्रवासः सुखकारक एवाऽभवत् । सर्वाण्यपि मम चित्तमाक्षिप्य स्थितानि वस्तूनि कञ्चित्कालं सर्वथा विस्मृतिं गतान्यासन् । परं मल्लेश्वरविभागाभ्यन्तरे नगरयानप्रवेशसमकालमेव सर्वाण्यपि तान्येकपद एव समुद्बुद्धानि । भूयोऽप्यातङ्कितः समजाये । कापि विचित्रा विक्षिप्तावस्था मामभ्यभवत् । मस्तिष्कं निष्क्रियं प्रत्यपद्यत । शरीरान्तर्गतं कृत्स्नमपि रुधिरं पानीयमिव सम्बभूव । किञ्च गात्रगतेभ्यो रोमरन्ध्रेभ्यः प्रस्वेदवारिधारारूपेण बहिरस्रवत् । मम भालपट्टेऽकस्मादेवाऽऽविर्भूतान् स्थूलस्थूलान् प्रस्वेदबिन्दून् यदा सा व्यलोकयत्, चकितचकितेव सा तदाऽपृच्छत्—"किं कारणम् ? नास्ति किम् भवदीया शरीरप्रकृतिरनपायिनी ?"

"ओम् अत्रभवति !"

"कुत एतत् ? किं सञ्जातम् ?"

"नाहं स्वकीयामवस्थां कीर्तयितुं प्रभुः ।" एतदुक्त्वा निमीलितनेत्रः संयोज्य खल्वासनभित्तिकया स्वकीयं पृष्ठं तत्रोपाविशम् ।

"किमपि भवदीयं साहाय्यं कर्तुमर्हामि किम् ?"

यत्सत्यं केनापि विहितं साहाय्यमतिमात्रमिष्टमासीन्मे तदानीम् । सर्वथा तस्मिन्नेव क्षणे काचन भद्रमहिला मम साहाय्यार्थमात्मानं निवेदयेत् किमतः परं सुप्रियं मे स्यात् ? उन्मीलितनेत्रः किमपि समुच्छ्वसितमिवात्मानमनुभूय यथाविधि समुपविश्य चाहं तामवोचम्—"ओम् भवति, सम्प्रति नितरामपेक्षितमस्ति मे भवदीयं साहाय्यम् । सम्प्रत्यहं घोरतरे दुस्तर-

मनोवगाहनशास्त्रसम्बन्धिनि विपन्महापङ्के पतितोऽस्मि। प्राप्नुयाम् चेदत्रभवत्या हस्तावलम्बनदानं किञ्चिद्, अतिमात्रं तर्ह्यात्मानमुपकृतमनुभवेयम्।"

मल्लेश्वरगतो नगरयानप्रस्थानकः समागतः। आवाम् उभावपि यानादवातराव।

सा मामपृच्छत्—"क्वास्ति भवतो यातव्यमिदानीम् ?"

किमहं प्रतिब्रूयाम् ? नासीदवधारितं क्व यातव्यमिति किञ्चिदपि मम। तस्मात्किमप्यपमृषितं वाक्यमहमभ्यदधाम्—"यातव्यं···क्व ?···अम्···। अस्ति यातव्यम्···परं···क्व ?···"

नूनं मदीयो मनोरोगो भूयोऽपि प्रत्युदबुध्यत। नेत्रयोः पुरतः सूचीभेद्यं तम इव निबिडत्वं प्राप्य प्रसृतमासीत्। कर्तव्याकर्तव्य-विवेक एव विलुप्तः समजायत।

"श्रूयताम् प्रत्यासन्नमेव मम सख्या गृहं विद्यते। नोचेद-नुचितं प्रतीयेत, तत्रैव गच्छावः। विलक्षणं किमपि भवदीयं मस्तिष्कगतं स्थितिजातम् पश्यामि। आयासितमतिमात्रम्भवेत् कारणेन केनापि मस्तिष्कयन्त्रं भवतः। तस्मान्मया सहागत्य तत्र कञ्चित्कालं विश्रान्तिसुखमनुभवतु भवान्।

"विश्रान्तिसुखमिति प्राह भवती ? नाहं जानामि किमि-दानीं करवाणीति। कञ्चित्कालमहमत्रैव पुरो विद्यमानस्य महतो वटवृक्षस्याऽधस्तात् तिष्ठानि। तेनैव मम किमपि विश्रान्ति-सुखं प्रतिपद्येत जातु।"

"नहि तावता तत्प्रतिपद्यते। कृपया, मया सहागच्छतु भवान्। क्वापि···"

"किम्प्रतिपत्तुकामा भवती क्वापि गत्वा ?"

"अथेदानीं क्वापि गत्वा नखम्पचा[1] बाष्पोलिका[2], माषवटक:[3], धिरडक:[4], कामरूपिकाकषायश्चेत्येवमादय: पदार्था गृह्येरन्निति मनसि सञ्जायते ।"

"हन्त, इमे तावन्मयाऽपि ग्रहीतव्या: । नास्ति दोषस्तर्हि मम भवत्या सहागमने । आगच्छामि तावत् ।" अहमवदम् ।

परं यत्राहं प्राप्तस्तद्गृहं नासीत्कस्याप्यन्यतरस्य, किन्तर्हि कुसुमलक्ष्म्या एव खल्वासीत्तद् गृहम् । या हि खल्वियं नवपरिचिता कुमारिका, साऽपि महाराष्ट्रीयैव 'सुलोचना अत्रे' इत्याख्याता कुसुमलक्ष्म्या: परमप्रिया बालसखी । हन्त, एष तावद् वृश्चिकभिया पलायमानस्याऽऽशीविषमुखे निपात: समजायत । कुसुमलक्ष्म्यास्तदनिन्द्यसुन्दरं मुखमण्डलं, तत्र च प्रसर्पन्तीं तां स्वर्गिकस्मितप्रभां विलोक्य किं किमनुभूतं नाम मदीयेन चेतसेति क: शक्नुयाद्वर्णयितुम् ?

न जाने किमनुभूतं भवेत् कुसुमलक्ष्म्याऽपि । परं सर्वथा स्वात्मानं पर्यवस्थाप्य किञ्चिद्विनोदसंवलितेनैव स्वरेण सा मामपृच्छत्—"कुत: सम्प्रति ?"

सुलोचना चकितेवाऽऽवामपश्यत् ।

"अपि पूर्वपरिचितौ युवाम् ?" साऽऽवामपृच्छत् ।

"अथ किम् ?" कुसुमलक्ष्मी: प्रत्यब्रवीत् । अपृच्छच्चापि

---

१. नखम्पचा='गरमागरम' इति भाषायाम् ।

२. बाष्पोलिका='इडली' इति यदुच्यते तत् । 'वाफोळ्ळें' इति मराठीभाषायाम् ।

३. माषवटक:='बड़ा' इति ख्यात: ।

४. धिरडक:='दोसा' इति ख्यात: ।

—"कथमनेन महाभागेन सह त्वदीयः परिचयः ?"

"यशवन्तपुराद् नगरयानमारुह्यैकासनासीनयोरत्रागच्छतोः समजन्यावयोर्यादृच्छिकः परिचयः ।"

मम तावत् संरुद्धो वाक्प्रसरः । संरुद्धश्च बुद्धिप्रसरः । किं-स्वरूपस्तदनन्तरं तयोर्वार्तालापः समजायतेति नाहं शक्नोमि संशब्दयितुम् । कतिपयैरेव क्षणैरभ्यवहरणीयानां पदार्थानां राशिरेवाऽस्माकं पुरतः समचीयत । यथेच्छं सर्वैस्तेषां पदार्थानां समाचारो गृहीतः । परं न मया ज्ञातं किं मया भुक्तं किं च मया पीतमिति । अवसिते कषायग्रहणे मां तत्रैव परित्यज्य 'So long Mr. Pandit!' इत्युक्त्वा निर्जगाम सुलोचना स्वकीयं कार्यनिलयं प्रति । गतवत्यां तस्यां कथञ्चिदपि लब्धा मया वाक् । अहं शनकैरेव कुसुमलक्ष्मीमवोचम्—"कुसुमलक्ष्मि, मया गन्तव्यमस्ति ।"

"किमाह भवान् ?"

"मया गन्तव्यमस्तीति ?"

"गन्तव्यम् ? केन खलु ?"

"मया ।"

"भवता ?"

"बाढम् मयैव ।"

"कदा खलु ?"

"अधुनैव ।"

"क्व खलु ?"

"हैदराबादनगरम् ।"

"हैदराबादनगरम् ?"

"बाढम् ।"

"किम्प्रयोजनं गमनम् ?"

"अस्ति बलवत्प्रयोजनं खल्वेकम् ।"

"किन्तत् ?"

"नाहं शक्नोमि सुचिरमत्राऽवस्थातुमिति ।"

"किं सञ्जातं तादृशं, येन न शक्यतेऽवस्थातुमत्र ? किं मयाऽपराद्धं किञ्चित् ?"

"न त्वया; किन्तर्हि मयाऽपराद्धमस्ति ।"

"भवताऽपराद्धम् ?"

"बाढम् ।"

"नाहं विश्वसिमि ।"

"कस्मात् खलु ?"

"न भवान् स्वप्नेऽप्यपराधं समाचरितुमर्हति । किञ्च भवादृशो यदप्याचरति, नैव तत्कालत्रयेणाऽप्यपराधाख्यां भजत इति बाढं मे मनो मामुपदिशति ।"

एतदाकर्ण्य पर्यश्रुणी समजायेतां मदीये लोचने । कीदृशो बलवानासीत् कुसुमलक्ष्म्या मद्विषयको विश्वासः । एतादृशमपि विस्रम्भशीलं निरागसं जनं किमप्यनृतं निवेद्य प्रतारयिष्याम्यहम् ? यद् भवति, तद् भवतु । नाहं भूतार्थमाच्छाद्याऽऽत्मानमितोऽपि पापजम्बालपल्वले निपातयामीत्यवधार्य यथाघटितं कृत्स्नमपि ह्यस्तनं वृत्तान्तजातं तस्यै निर्विशङ्कं मया निवेदितम् ।

सा नैव किमपि जगाद । उपरितनमोष्ठं दन्तैः समाकृष्य कञ्चित्कालं सा तथैवाऽतिष्ठत् । सूक्ष्मः प्रस्वेदः प्रत्याविर्भूतस्तस्मिँस्तदीये खल्वोष्ठपट्टके । स्वशाटिकाञ्चलेन तमपमार्ज्य

सा शनकैः प्रोवाच—"साधु तर्हि । आगम्यताम् । अचिरादेव भोजनादिव्यापाराणां निर्वर्तनवेला भविष्यति । तदर्थं किमपि करणीयं मया । तावत्कालं किमपि विश्रान्तिसुखमनुभूयताम् ।"

× ×

भोजनादिकं विधाय विश्रान्तिलाभाय तस्मिन्नेव कक्षेऽहमगच्छम्, यत्र प्रथमेऽहनि गतवानासम् । शरीरगतं सर्वमपि स्नायुमण्डलं शिथिलीकृत्य पर्यङ्के निपतनं नासीत्तावत्सुकरमद्य । तथापि केनापि विधिना तथा कृत्वा न्यपतम् । कतिपयैरेव क्षणैर्मामभ्यभवदक्षिनिमीलिका । न वेद्मि कदा कुसुमलक्ष्मीरपि तत्रैव प्रथमदिनप्रकारेणैव निःशब्दं मदीयमुत्तमाङ्गं कराभ्यां समुत्तोल्य स्वकीय ऊरुभागे समस्थापयत् । किञ्च कोमलकोमलाभ्यां करतलाभ्यां संवाहयितुमारेभे । उन्मीलिते मदीये चक्षुषी । ऊर्ध्वायां दिश्यपश्यम् । ममाक्ष्यभिमुखमेवाऽऽस्ताम् कुसुमलक्ष्म्या अक्षिणी । अतिमात्रं भीषणः खल्वश्रुमेघस्तत्र मण्डलायित इवासीत् । किञ्च ताभ्यां सह ममाक्षिसम्मिलनसमकालमेव प्रारभत बलवानश्रुप्रवर्षः । त्रपटत्रपटाकुर्वन्तः स्थूलास्तेऽश्रुजलबिन्दवो मम मूर्धजान् उन्दितुमारेभिरे । निःशब्दमेव स्वकीयं करमुत्थाप्य कुसुमलक्ष्म्याः कपोलप्रान्तावतीर्णान्यश्रूणि शनकैरपमार्जयन्नहमवोचम्—"वेत्सि कुसुमलक्ष्मि, मयैव दुरात्मना तव विश्वासघातः कृतः । किञ्च तादृशो घोरतरो राक्षसजनोचितो विश्वासघातः कृतो, यं स्मृत्वा यावज्जीवमपि त्वं न मां पारियष्यसि मर्षितुम् । एतावत्ता क्षणमप्यवस्थातुं त्वदीये गृहे किञ्च बेंगलूरनगरे खल्वेतस्मिन् न युक्तं मम ।"

"सर्वमवगच्छामि । दुरदृष्टं विहाय कमन्यं जनं दोष-भाजनं विदध्याम् ?" एतदुक्त्वा सा सफूत्कारं क्रन्दितुमारेभे ।

अहमुदतिष्ठम् । ऐच्छम् तामाकृष्य स्वोत्सङ्गे स्थापयेयम् किञ्च स्ववक्षसा समासञ्जयेयमिति । परमन्वभवम् व्यपगत इदानीं तद्विधाचाराधिकारो मदीयः, सम्प्रत्यहं स्वकीयायामेव दृष्टयाम् अस्पृश्यः समजाये, अन्त्यजः समजाये, चाण्डालः समजाये इति । नाहमिदानीं कुसुमलक्ष्म्याः शुचितरं ब्राह्मणदेहमर्हामि मद्विधनिरतिशयाशुचिश्वपचजनकरस्पर्शदूषितं कर्तुमिति । तस्माद्दूरस्थित एवाहं कुसुमलक्ष्मीं प्रत्यवोचम्—"किं क्रन्दसि कुसुमलक्ष्मि, मादृशं दुराक्रन्दं जनमुद्दिश्य । मा क्रन्द । बहवः खलु मादृशा असत्यसन्धा जना, ये हि त्वादृश्युपकारिणि, विस्रब्धे, शुद्धमतौ च जने तद्विधानि समाचरन्ति नृशंसतराणि पापानि, येषां कृते नास्ति कश्चनापि मार्जनोपायः । न वेद्मि कथमियं भगवती वसुधा तानपि जनान् वक्षसा वहति ! नूनं 'न विश्वसे-दविश्वस्ते ; विश्वस्तेऽपि न विश्वसेत् । विश्वासाद् भयमुत्पन्नं मूलान्यपि निकृन्तती'ति यदुक्तं नीतिशास्त्रविशारदैस्तदेव सर्वथा भूतार्थं वचनम् । तथाप्येतादृशेषु प्रसङ्गेषु धैर्यावलम्ब-नमिदमेकमेवाऽवलम्बनम् । तस्मात्त्वं धैर्यमेवाऽवलम्बस्व । न केवलं त्वयैव धैर्यावलम्बनं कार्यं, किन्तर्ह्यहमपि धैर्यावलम्बनार्थं प्रयोज्यः । इमे खल्वेव केचन तादृशाः क्षणा, येषु स्त्रीभिः पुरुषेभ्योऽभ्यधिकं कठोरहृदयाभिर्भाव्यम् ।"

"नाहं कठोरहृदया भवितुमर्हामि विकासमहाभाग, नाहं भवितुमर्हामि । कया रीत्या सोढव्यं मया ह्यप्रत्याशितवज्रपात-प्रतीकाशं मानसं व्यसनमिदम् ? अगणिताः सुखस्वप्ना

धूलिसाज्जाताः । अनन्ताः सुखप्रदाः कल्पना विलयङ्गताः । अथेदानीं कथङ्कारं मया सोढव्यानि दुःसहानि खल्विमानि सर्वाण्यपि कृच्छ्राणि मर्मनिकृन्तनानि ?"

अहमवोचम्—"सर्वथा वेद्मि कथं शतधा विदीर्यते त्वदीयं हृदयमिति । अहमेव नराधमस्तावकीनस्य महतो व्यसनौघस्य खल्वस्य हेतुरित्यपि विजानामि । तस्मात्कथमपत्रपेण जाल्मेन मया किमप्येतस्मिन् प्रसङ्गे जल्पितव्यम् ? तथापि वच्मि—प्रबला खलु कालस्य शक्तिः । एष कालः स्वयमेव त्वदीयानां भीष्माणामपि हृदयव्रणानामौषधोपचारमुपकल्पयिष्यति । अथ जानास्येव कुसुमलक्ष्मि, तव जीवितमन्दिराभ्यन्तरे ह्यनिहित-चरणपत्रस्य सतो मम कदा तु नाम नगरमेतद्विहायाऽन्यत्र क्वापि गमनमासीदपरिहार्यमेवेति । इदानीमपि सैवाऽवस्थेति मनसा सम्प्रधार्य देहि मे प्रसन्नवदना सती नगरपरित्यागदीक्षाभिक्षाम् । अतिथिभावमुपागतस्याऽविदितचरित्रस्य कस्याप्येकस्य जनस्य यथासाध्यं सप्रयत्नं च प्रियाचरणं समाचरितवत्यसि । अतिथे-र्हृदयाभ्यन्तरे त्वन्निबन्धनाः स्मृतयः कस्यापि देवमन्दारतरो-र्दिव्याः सुमनःसौरभविशेषा इव सुचिरं निवसिष्यन्ति । एतेनापि खलु त्वया सुप्रसन्नया भाव्यम् ।"

"सर्वथा युक्तमुक्तं भवता । भवान् ममातिथिरेवाऽभवत् किञ्चान्तिमं क्षणं यावद् भवानतिथिरेव भूत्वाऽतिष्ठत् । न ततोऽग्रे शक्यमभवत् पदमपि प्रसर्पितुम् । मया नाम भवन्त-मन्तरङ्गतमेन भावेनात्मसात्कर्तुं बहु प्रयतितम् । परं किं ब्रवीमि मन्दभाग्या ? 'यद्धात्रा निजभालपट्टलिखितं तन्मार्जितुं कः क्षमः ?' अथेदानीं भवता गन्तव्यमस्ति न वा ? गम्यताम् ।

स्वगृहात्प्रतिनिवर्तमानमतिथिम्प्रति 'गच्छ भद्र, यथासुखमि'ति वचनमप्यातिथेय्या धर्म एव । तं धर्ममहमवश्यं पालयिष्यामि ।" एवमुक्त्वा कुसुमलक्ष्म्या किञ्चिदिवाऽङ्कुशितः स्वकीयोऽश्रुवेगः ।

किञ्च परमेश्वरप्रेरितेव सहसा तस्मात् स्थानादुत्थाय सा कृत्स्नमपि मदीयं प्रतिनिवर्तनप्रबन्धं सुव्यवस्थितं यथा स्यात्तथाऽकरोत् ।

× ×

आवामुभावपि बेङ्गलूरनगरगतं बाष्पगन्त्रीप्रस्थानकमभ्यागच्छाव । हैदराबादनगरं यावद् गन्तुमपेक्षितं गन्त्रीयात्रापत्रमहमक्रीणाम् । आवामुभावपि प्रस्थानकस्थे सुविस्तीर्णे सञ्चारकुट्टिमे[1] समागच्छाव । गन्त्री समागताऽविद्यत । कुसुमलक्ष्मीरपि मम शिबकस्याऽभ्यन्तरे प्रविश्य सर्वमपि मदीयं तत्रोपवेशननिबन्धनं संविधानकं स्वयं व्यदधात् । किञ्च गन्त्र्या निर्गमनसमयमवेक्ष्य सा तस्माच्छिबकाद् बहिरायात् । बाष्पगन्त्रीपालः[2] गन्त्रीप्रयाणशङ्खिकां दध्मौ । चलिता बाष्पगन्त्री । ननु वक्तव्यं चलितं मदीयेनैव हृदयमूलेन । अतिमात्रमायासपूर्वकमहमभ्यदधाम्—"भवतु । कुसुमलक्ष्मि, नमस्कृतयः ।"

"नमस्कृतयः ।" कुसुमलक्ष्मीः प्रत्यभ्यदधात् । परं येन कण्ठस्वरेण सैतदभ्यदधात्, स स्वरो मदीयं मर्मस्थलं विदार्य सुदूरं यावदव्याहतं निरगादिव । किञ्चोत्पश्यामि नायं स्वरो यावज्जीवं मामनु धावनं विस्मृत्यापि परित्यक्ष्यतीति ।

॥ समाप्तोऽयं ग्रन्थः ॥

॥ ग्रन्थपरिसमाप्तिदिनाङ्कः २७-४-१९६० ॥

१. सञ्चारार्थं निर्मितं कुट्टिममिति सञ्चारकुट्टिमम्=फलाटकः । 'प्लेटफार्म' इत्यांग्लभाषायाम् । २. बाष्पगन्त्रीपालः='गार्ड' इति ख्यातः ।